## EDITOR'S NOTE.

The learned work, of which the first Fasciculus is now published, was composed by the greatest authority in this line, after Çrī Rāmānuja. The Commentary is a labour of love by one who was the author's warmest admirer and the most ardent student. I need hardly mention that, in venturing to submit to the public this first instalment of what may be truly described as a marvel of learning and of reasoning, the editor has the satisfaction that, so far as circumstances permitted, it has passed through the hands of Çrīman Mahāmahopādhyāya Çrī-Rarga Chariar, Echambari Tiruvendruburam Çatāvadhāni Çrīnivāsa Chariar, and Tirumanjalampadadur Narasimha Chariar.

That their names are a guarantee for accuracy, and that, without their services, the editor should have despaired of ever accomplishing even this minor task goes without saying. The editor's special thanks are due to Çrīman Narasimha Chariar who, being near at hand, has been most useful.

हरिः ओम् ।

श्रीमते हयवदनपरब्रह्मणे नमः ।

श्रीमते भगवद्रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# शतदूषणी ।

## ब्रह्मशब्दवृत्त्यनुपपत्तिवादः प्रथमः ।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

समाहारः साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कलि कथककोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥

दृढग्रथमसम्भवत्कुमतिजालकूलंकषाः
मृषामतविषानलज्वलितजीवजीवातवः ।
चरन्त्यमृतमच्चरं यतिपुरन्दरस्योक्तयः
चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥

प्राचीमुपेत्यपदवीं यतिराजदृ(जु)ष्टां
तत्सन्निकृष्टमपि वा ( यत्किञ्चिदन्यदपि वा ) मतमाश्रयन्तः ।
प्राज्ञा यथोदितमिदं शुकवत्पठन्तः
प्रच्छन्नबौद्धविजये परितोषयतध्वम् ॥

१५ वादाहवेषु निर्भेत्तुं वेदमार्गविदूषकान् ।
प्रयुज्यतां शरश्रेणी निशिताशतदूषणी ॥

तत्र तावच्छास्त्रारम्भे, विचारविषयत्वेन सूत्रकृत्यद-
सूचयत् । परोक्षा ब्रह्मशब्दस्य वृत्तिरत्र निरस्यते ॥ निर्विशेष
ब्रह्मवादे ब्रह्मशब्दस्य क्वचिन्मुख्य(वृत्त)त्वमस्ति न वा,
२० नचेदसाधुत्वापत्तिः, साधुत्वस्य मिथ्यात्वमभ्युपगच्छतामः-
साधुत्वमिष्टमिति चेत्, हन्त तर्हि सर्वशब्दासाधुत्वम्,
साध्वसाधुविवेकाभावे च कृतं साङ्गोपाङ्गैर्वेदैः, मुख्यार्थ-
शून्यस्य तन्मूलवृत्त्यन्तरे लिङ्गत्वेचासम्भवति कथं क्वचिद्-
बोधकत्वमपि, न च साङ्केतिकोऽयमपभ्रंशो वा, येन
२५ वाचकत्वाभिमानाद्बोधकत्वं स्यात्, यस्यायमपभ्रंशश्शङ्क्येत
सोऽपि तथा वृत्तिविकल्पेन निर्धूयेत, ननु ब्रह्मशब्दस्यायं
महिमा, यन्मुख्यार्थविरहेऽपि नित्यं लक्षणया ब्रह्म बोधय-
तीति, तदिदं वन्ध्यायाः पौत्रदर्शनम्, मुख्यार्थसंबन्धिन्यमुख्ये
वृत्तिर्हि लक्षणा, तदभावेऽपि तद्वृत्तिं भवानेव भाषेत,
३० किञ्चैवममुख्यार्थशून्यास्सर्वे शब्दास्तं तमर्थं लक्षयन्तीति स्वोक्ति-
येत महामीमांसकेन, कोहिलदुक्तन्यायवित्कुत्रापि प्रक्रि-
कृप्तिगौरवमुपेयेत्, मुख्यार्थशून्येन ब्रह्म लक्ष्यमितिवदता

तदपि मुखान्तरेण संवृतिमुखे निक्षिप्तम्, अवाच्यवादाश्च वाच्यवादेन निरसिष्यन्ते; अस्ति चेत्किमन्यस्मिन् विचारविषये

३५ वा, नाद्यः, निर्निमित्तत्वे पुनरसाधुत्वापातात्, यदृच्छा-शब्दोऽपि हि स्वरूपनिमित्तकश्शास्त्रज्ञैश्शिक्षितः, न चायं सः मानाभावात्, निरुक्तिविरोधाच्च, सनिमित्तत्वे च यः प्रकृत्यादिष्वस्य प्रयोगः स ब्रह्मगुणलेशयोगादौपचारिक इत्यभाषि, अनुवृत्तस्य आकृतिरूपस्य निमित्तस्यासिद्धेः,

४० बृहत्त्व बृंहणत्वमात्रस्य बृहदादिशब्दवदतिप्रसञ्जित्वात्, अनेक-शक्तिकल्पने गौरवात्, लोकोत्तरबृहत्त्वादि मात्रस्य तु भगव-च्छब्दनया (न्याया) दुपचार द्वारत्वात्, अन्यथा गौणवृत्ति-र्लुप्येत, यत्साक्षादपरोक्षं (तद्ब्र) ब्रह्मेति विशेषणञ्चान्यत्रा-मुख्यतां व्यनक्ति, "तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने"

४५ इति च स्मर्यते, "द्वे ब्रह्मणी वेदितव्ये" इत्यादिकमपि "त्रीणितेजांसि न स्पृशेत्" इत्यादिवन्मुख्यामुख्यसमुच्चयाभि-प्रायम्; न द्वितीयः, शुद्धोपहितविकल्पासहत्वात्, न हि निर्विशेषतयाभिमते शुद्धे "बृंहति बृंहयती"ति श्रुत्युक्तं निमित्तमस्ति, अधिष्ठानत्वेन सर्वविवर्त्तमूलतया च तत्सा-

५० दिति चेन्न; तच्च तदुभयानभ्युपगमात्, अन्यथा मुक्तावपि तद्योगात् मुक्तेरेव मुक्तेः, उपलक्षणार्थं निर्वचनमिति चेन्न; विशेषणार्थत्वे बाधका(धा)भावात्, "तस्मादुच्यते परं ब्रह्मे"ति प्रवृत्तिनिमित्ततयैवबृहत्त्वादिश्रुतेः, "बृहत्त्वाद्बृंहणत्वाच्च तद्-ब्रह्मेत्यभिधीयत" इति स्मृतेश्च, "गोत्वाभिसम्बन्धाद्गौ"रिति-

५५ वत्; अस्तु व्यावहारिकन्तदेशिकत्वम्; कथन्तर्हि शुद्धे वृत्तिः;
तदपि तद्द्वाराव(गाह्यत)गम्यत इति चेत्; तर्हितममुख्यम्,
उपहितमुख्यमिति पक्षस्तु श्रुतिसिद्धस्वाभाविकसार्वज्ञ्या-
द्युपहित (पेत) त्वविवक्षायां स्वमतविरोधादपास्तः, स्वाभि-
मताज्ञानादिदोषोपहितत्वस्य चालैङ्गमश्रौतमस्मार्तमशौच-
६० ञ्चेति स्थापयिष्यते, तत्र च शुद्धे परे ब्रह्मणि निर्दोषभव्यगुण-
विशिष्टविषयभगवच्छब्दमुख्यवृत्तिनिरुक्तिविरोधः, "परम्-
ब्रह्मपरन्धामपवित्रं परमं भवानि" ति स्तुत्यनुपपत्तिः,
पवित्रं परममित्यादिसमभिव्याहारवैयर्थ्यं (घर्थ्यं) च।
निर्विशेषलक्षणायान्तु स्तुति र्न कथञ्चिदपि सम्भवति;
६५ गुणवत्त्वस्य गुणाभिधानरूपत्वात्तस्या इति, पूर्वापरादि-
विसंवादाच्च न कुत्रापि निर्गुणसिद्धिः, अपिचाविद्यानि-
वृत्त्यर्थमिदञ्ज्ञातव्यमुपहितन्निरुपाधिकं वा; आद्ये तत्त्वा-
वेदकतटस्थ स्वरूपलक्षणादिभिरपि तद्ग्रहणादविशिष्टब्रह्म-
णिवृत्त्यप्रसिद्ध्यास्मदिष्टसिद्धिस्स्यात्, स्वाज्ञातत्त्वज्ञानादेव मोक्ष-
७० सिद्धिः, तस्य मिथ्यात्वेनैव युष्माभिरङ्गीकारात्; द्वितीये
त्वतद्व्युत्पत्तेन तद(वृत्त्य)प्रयोग एव, तल्लक्षितन्निशाम्यते
लक्ष्यते शोध्यते चेति चेत्, तत एव निर्विशेषलक्षकब्रह्मशब्दाद्
ज्ञातत्वलक्षितत्वशोधितत्वसिद्ध्या जिज्ञासाद्यनपेक्षास्यात्; न
च जिज्ञासादौ विधिः, अदृष्टार्थत्वाभावात्; येन पिष्टपेषणं
७५ सहेम, निरुपाधिके ब्रह्मशब्दवृत्तिमविदुषः प्रतिबोधनेन सर्वं
सार्थमिति चेत्; किममुख्यामन्यां वा, पूर्वत्र पक्षस्तव्याघातः,

सवस्योपहितमुख्यवृत्तिविषयबोधनोपक्षीणत्वात्, अनुपहि-
तेहि लक्षणामेववदसि, अभिधानाङ्गीकारे वा किं सार्व-
ज्ञ्यादिविशिष्टपरब्रह्माभिधानप्रद्वेषेण; उत्तरत्र “अधीहि”-
८० त्यादि वैषम्यम्; ब्रह्मशब्दस्य मुख्यार्थमधीहीत्युक्ते लक्ष्यार्थ-
लक्षणोपदेशस्य असङ्गतेः, लक्ष्यार्थमधीहीति तु निरुत्थानम्,
कारणाभावात्, **मुख्यार्थ**बाधादिनिश्चयपूर्वकत्वादमुख्य-
(ख्यार्थ)वृत्तिविज्ञप्तेः, तन्निश्चयस्य चात्र **ततः** प्रागसिद्धेः,
**तत्सिद्धौ** वा **निर्विशेषावगमे** किं प्रश्नेन प्रत्युक्त्या वा;
८५ **मुख्या**र्थबाधोनिश्चितः, **लक्ष्या**र्थविशेषस्य न विदितः अस्मि-
न्नवसरे प्रश्नाद्यस्तु, माभूत्, किं **प्रत्य**क्षेण बाधः, किंवानुमा-
नेन, अथ तर्केण, अथवा तादृशेनागमेन; नाद्यः, अतीन्द्रिये
प्रत्यक्षबाधायोगात्, न द्वितीय तृतीयौ; अनुमानस्य तर्क-
मात्रस्य च नित्यागमैःस्पर्धितुमशक्तेः; न चतुर्थः; न बृंहति न
९० बृंहयतीति च वाक्यान्तराभावात्, निर्गुणादिवाक्यैस्तत्सिद्धि-
रिति चेत्; तथापि निर्मूलः प्रश्नः, तैरेवबुभुत्सित बोधात्;
न च तैरपि (ततोऽपि) तत्सिद्धिर्न्याय्या, अविरुद्धविषयस्थित्या
तेषामप्यान्यपर्यस्य वक्ष्यमाणत्वात्; **आपात**विदितार्थश्रुति-
विप्रतिपत्त्यासन्दिहानः **कीदृग्भूतं** ब्रह्मशब्दविवक्षितमिति
९५ **पृच्छती**ति चेत्, नैवम्; तटस्थस्वरूपलक्षणाभ्यामपि
कारणत्ववैलक्षण्यविषयाभ्यां सन्देहस्यैवस्थापनप्रसङ्गात्; **न च**
निर्विशेषं सविशेषं वेति विमृशतोजगत्कारणत्वोक्त्या निर्विशेष-
त्वनिश्चयस्सिध्येत्, अपि तु **सर्वकार**णत्वाच्चिह्नं **सर्व**ज्ञसर्व-

विदादिशब्दकण्ठोक्तञ्च सर्वज्ञत्वादिकं ब्रह्मत्वमेव निर्धार्यते;

१०० नन्वविदितमुख्यलक्ष(लाक्षणि)कविभागः शिष्योमुमुक्षुभि-
जिज्ञास्यं ब्रह्मेति सामान्यत उपश्रुत्य तल्लक्षणं पृच्छति,
आचार्यस्तु कृत्स्नविद्ब्रह्मशब्दलक्ष्यनिर्विशेषवस्तुलक्षणमुप-
दिश(तु)ति, तदपि न, मुमुक्षुभिर्जिज्ञास्यं निर्विशेषमि-
त्यस्यैव निर्मूलत्वात्; प्रत्युत "तमेवं विद्वा" नित्यादिभि-

१०५ र्विभूतिगुणविग्रहव्यापार विशिष्टमहापुरुषवेदनस्यैवामृ-
तत्वप्राप्त्युपायत्वश्रवणादबाधाच्च; अतो यथाश्रुत एव
ब्रह्मशब्दार्थः; निर्वक्ति च यास्कः "ब्रह्म परिवृढं सर्वत"
इति. इदं सर्वमभिप्रेत्याभाष्यत "ब्रह्मशब्देन च स्वभावतो
निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः

११० पुरुषोत्तमोऽभिधीयत" इति, अभिधीयते—मुख्ययावृत्त्या
बोध्यते, अनेवन्नामकमनेवंविधञ्च किमपि ब्रह्मेति वदतां
सर्वेषामप्य(मेवा)त्रनिरासो भाव्यः, विशेषणद्वयेन च
ब्रह्मपुरुषोत्तमशब्दयोर्निरुक्तिरपि व्यज्यते ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां
ब्रह्मशब्दवृत्त्यनुपपत्तिवादः प्रथमः ।

---

श्रीमते निगमान्तमहादेशिकाय नमः ।

---

श्रीमते निगमान्तमहादेशिकाय नमः ।

## शतदूषण्यां जिज्ञासानुपपत्तिवादो द्वितीयः ।

अथ स्वात्मैकभासस्य निर्विशेषस्य दुष्यतः ।
विशुद्धस्यापि जिज्ञासा परेष्टा प्रतिषिध्यते ॥

यदाहुः । ब्रह्मशब्दनिर्दिष्टं विचार्यम् अनुदितानस्तमितस्वरूपैकप्रकाशमशेषविशेषशून्यमनाद्यविद्यान्धकारितन्नित्यशुद्धमिति, तत्र विचित्रो व्याघातः, यद्भिन्नवित्तिकर्म कथन्तत्र जिज्ञासा; सामान्यतोविदितेविशेषतश्च वेदितव्ये तत्प्रवृत्तेः; अन्यथाहेतुप्रयोजनविरहे तदयोगात्; न च, ब्रह्मणि तथाविधवेदनद्वयविषयत्वं परैरिष्यते, जिज्ञासापूर्वकं परीक्षणमत्रप्रक्रम्यते, तच्च तत्र प्रमाणोपक्षेपेण, प्रमाणञ्च निर्विषयन्न निरूप्यम्, सविषयत्वे तु तद्विषयत्वात् दृश्यत्वमिथ्यात्वजडत्वादिस्वोक्तानिष्टापत्तिः; स्वरूपप्रकाश एव हेतुः फलञ्च जिज्ञासाया इति चेन्न; तस्यास्तदुभयसामानाधिकरण्यनियमदृष्टेः, स्वरूपप्रकाशस्य च तदेकाधारताभावात्; अनादेः प्रकाशस्य च निरपेक्षहेतुत्वे जिज्ञासानादित्वप्रसक्तेः; सापेक्षत्वे यथादर्शनं स्वविषयवेदनापेक्षणात्, प्रागसिद्धस्य तुच्छत्वकार्यत्वयोरन्यतरप्रसङ्गात्, प्राक्सिद्धस्य फलत्वायोगात्, फलत्वे चानादित्वभङ्गात्, उपहितरूपेण वेदनद्वयविषयत्वाज्जिज्ञासा स्यादिति चेन्न; हेतोरुपहितविषयत्वाभ्युपगमेऽपि फलस्य तथात्वे भ्रान्तित्वापातात्, भ्रान्तेश्चासम्पाद्यत्वात्

२० तदर्थं(र्थः) प्रेक्षावतां प्रारम्भः, भ्रान्तिमेव प्रमितिम्मन्यमानैस्सा
संपाद्येति चेन्न; परीक्षकेभ्योऽपि प्राथमिकभ्रान्तिप्रमात्वव्यव-
सायिनामेव प्रागल्भ्यप्रसङ्गात्, स्वरूपव्यतिरिक्तं कृत्स्नं
मिथ्येति प्रयोजकशिक्षणविरोधाच्च, नित्यभूतेऽपि समाधिवत्
स्वमात्र साक्षित्वं वैशद्यमात्रं वा साध्यमिति चेन्न; तयोरपि
२५ तत्स्वरूपत्वे सिद्धत्वात्; धर्मत्वे सत्यत्वमिथ्यात्वविकल्पक्षोभात्;
अतिरिक्ताकारप्रकाश एव (च वै) चेद्वैशद्यन्तस्मिन्नप्याकारे
स एव विकल्पः, नित्यस्वमात्रचिति निरंशेनिर्विशेषे च क
इदानीं प्रकाश्य आकारः, कथञ्च जिज्ञासा; इदं किमिति
वा कथमिति वा स्यात्, सर्वत्र यथायथं विदिताविदि-
३० ताकारभेदो दुस्त्यजः, कृत्स्नावगत्यनवगत्योर्नैष्फल्यनिर्हे-
तुकत्वाभ्यान्तदयोगात्; किं कथमित्यत्र का गतिरिति
चेत्, न, तत्रापि सामान्यतः प्रतीतसमुदायान्तर्गतविशेष-
निर्धारणार्थत्वात्किमादेः, एतेषु किङ्कथमित्येव हि तत्रा-
काङ्क्षा; यः पुनर्ज्ञाताज्ञातांशविकल्पेन जिज्ञासास्वरूपमेव
३५ खण्डयेत्, स ब्रह्मजिज्ञासामपि जिघांसती(खण्डयेदि)ति कः
प्रकृतोपयोगः, दृष्टा च सा यथालोकमिहापि; अन्यथा-
ऽनारम्भेण शास्त्रोच्छित्तेः, अस्त्विहापि सामान्यतः स्वरूपज्ञप्तिः
अध्यासविरोधिरूपेण विशेषतस्य जिज्ञासा, मैवं; निर्विशेषे
सामान्यासिद्धेः, निस्सामान्ये च विशेषायोगात्, कल्पनया
४० तदुपपत्तिरिति चेन्न; सामान्यरूपस्य कल्पितत्वे स्वरूपो-
च्छित्तेः, विशेषासंभवाच्च, नह्यकिञ्चिद्भूतो विशेषतः कश्चित्

स्यात्, न खलु खरशृङ्गे कुण्ठत्वादिः, न च "अस्ति ब्रह्मेति चेद्वेद, सन्तमेनन्ततो विदु"रिति श्रावयन्ती श्रुतिः ब्रह्मणः सामान्यधीबाधं सहेत; अत एवा(वक्लृप्तिना)स्तित्वरूपसामा-
४५ न्याकारभ्रमाद्विशेष बुभुत्सेति प्रत्युक्तम्, अपसिद्धान्ताच्च; विशेषस्य तु कल्पितत्वे तज्जिज्ञासावैफल्यं, न हि ब्रह्मण्यसद्-पूर्वाकारकल्पनार्थं पूर्वकल्पितमिथ्याकारप्रतीत्यर्थं वा शारीर-कमित्यवैदबाह्यः कश्चिदपि क्षमते, कल्पिताकारमिथ्यात्व-बोधनार्थमिति तु स्यात्, न तर्हि ब्रह्मजिज्ञास्यम्, अपि
५० त्वयमाकारस्तत्योमिथ्यावेति, ततः किमिति चेत्, श्रुति-सूत्र स्वरसार्थभङ्ग(त्याग) स्तावत्, ब्रह्मात्मैक्यं शास्त्रवेद्यमिति स्वमतव्याहतिश्च, कल्पितभेदमिथ्यात्वधीरेव तद्धीरिति चेत्, न, माध्यमिकमतेऽपि तद्भावेन त्वदिष्टैक्यलाभे तद्वि-वादविलयापातात्; यच्च मन्यसे, कल्पिताकार मिथ्यात्व-
५५ बुद्ध्यापि ब्रह्मणस्तच्छून्यत्वमवसेयमिति तज्जिज्ञासाद्युपपत्ति-रिति, तदपि यदि सामान्यबुद्धिक्रोडीकृतन्तदा न जिज्ञास्यम्; बहिष्ठस्यतु सत्यत्वे सद्वितीयता, मिथ्यात्वे प्रतियोगिसाहित्यसत्यता, साहित्यराहित्ययोस्सहज सङ्घर्षात्, परस्परविरोधे (च) प्रकारान्तरस्थित्ययोगात्; यदि राहि-
६० त्यमपि कल्पितं, कथन्तदा कल्पिताकारराहित्यनिवृत्तिः; यत्किञ्चिन्निवृत्तिमात्रन्तु प्रागपि सुलभमिति कृतं (किं) तदर्थविचारव्यसनेन, अतस्स्वीकुरुवामसत्याकार(द्वय)वैशिष्ट्यं परिहर वा तज्जिज्ञासामिति. किञ्च यद्यशुद्धं ब्रह्मजिज्ञासो-

वेदितव्यन्तर्हि दुस्त्यजनैष्फल्यम्, तथा प्रकाशस्य संसारभेषज-
६५ त्वानभ्युपगमात्, अन्यथा प्रागेव मुक्तिसिद्धौ किमर्था
जिज्ञासा, कथञ्चाशुद्धतत्त्वोपदेशिनश्शास्त्रस्य तत्त्वावेदकत्वम्,
कथन्तरामतत्त्वज्ञानेन भ्रान्तिविलयः; ननु भुजङ्गभ्रमेण
दामदर्वीकरभ्रमनिवृत्तिवत्स्यात्; न स्यात्, तद्वदेव भ्रान्त्य-
न्तरस्थितावात्यन्तिकत्वासिद्धेः; तद्विलापकतत्त्वज्ञानादेरक्र-
७० क्रमेणाचासम्भवात्; अहेतुकविनाशादेश्च निरसिष्यमाण-
त्वात्। शुद्धन्तर्हि जिज्ञास्यमपि न ते स्यात्; शुद्धातत्त्व-
रूपस्पर्शानभ्युपगमात्, शाखाचन्द्रन्यायेन स्वरूपस्पर्श इवेति
मतमिति चेत्; कथन्तदधीनबोधविषयतामन्तरेण दृष्टान्त-
दार्ष्टान्तिकयोस्तदुपलक्ष्यत्वम्, तद्विषयत्वे च कथन्तत्प्रयुक्त-
७५ दोषातिक्रमः, सोऽपि बोधस्ववेद्यत(ता)या भ्रान्तिरसत्यत्वे-
त्यदोष इति चेत्, विलीनन्तत्त्वावेदकवाक्यैः; वेद्यमिथ्यात्व-
मन्तरेण भ्रान्तित्वायोगात्, उपलक्षणपर्यावलम्बनैष्फल्याच्च;
शुद्धिश्चास्य नित्याऽनित्या वा, आद्ये किमर्थाजिज्ञासा,
अन्ततस्तस्यास्तादर्थ्यात्, शुद्धताध्यवसायार्थं सा स्यात् न तु
८० शुद्ध्यर्थमिति चेन्न, तदध्यवसायेनापि तत्सिद्ध्यर्थेन भवितव्यम्,
अन्यथा नैष्फल्यात्, आरोपिताशुद्धिनिरसनात् साफल्य-
मिति चेन्न, आरोपसंभवे नित्यशुद्ध्ययोगात्; उपरक्तेऽपि
स्फटिकेशुभ्रत्ववत् (तत्) संभव इति चेन्न, भावानभिज्ञानात्,
न हि वयमारोप्य(प)दोषत्वेनाशुद्धिं प्रसञ्जयामः, ब्रह्म-
८५ ण्येव कुदृष्टिक(र्तृक)स्थितविविध(विपर्यय)दोषदृष्टेरभ्युपगमात्,

किन्तु भ्रमाद्याधारतया, न तथा स्फटिकस्स्वयं स्वात्म-
निरागमध्यस्यति, न च तत्कर्तृकोऽन्यकर्तृको वा रक्तताध्या-
सस्तत्कृतिमात्स्यशुद्धिविरोधी; इह तु स्वदोषेण ब्रह्मणि
स्वयमेव बंभ्रम्यमाणे कथं भ्रान्त्यादिप्रत्यनीकतामयी शुद्धि-
९० र्नित्या; भ्रान्तिरपि स्फटिकरागादि(राग)वत्तत्त्वतो नास्तीति
निस्सार इति चेत्, स्थितन्तर्हि विचारनैष्फल्यम्, असत्येव
भ्रान्तिस्सतीव भातीति तन्निवर्तनम् फलमिति चेत्, न,
तत्सत्त्वभ्रमसत्यत्वमिथ्यात्वविकल्पे (सति) सद्वितीयत्वानवस्थ-
योरन्यतरापातात्; स्वरूपेण ब्रह्मनभ्राम्यति किन्तु जीवे-
९५ श्वररूपाभ्यामिति चेत्; हन्त एकां व्याहृतिम् परिहर्तुम-
नेकामुपादत्से; कथमभ्रान्तस्य तस्य तद्भावः, कथं सर्वज्ञोऽपि
भ्राम्यतीति विवचाप्युत्तिष्ठेत; कथञ्च एक आत्मायुगपत्सर्व-
भ्रमसत्त्वात्मानमनुसन्दधीत; प्रपञ्चयिष्यते चैतत्. उत्तरञ्च
तु नित्यशुद्धत्वश्रुत्यादिविरोधः, किञ्चोभयावधिमत्तयातद-
१०० नित्यत्वम् उत्तरैकावधिमत्तया पूर्वैकावधिमत्तया वा; नाद्यः,
त्रिवर्गापवर्गयोरैकराश्यप्रसङ्गात्, वैराग्योपदेशादिवैयर्थ्यात्;
अपुनरावृत्ति श्रुत्यादिविरोधाच्च; अत एव न द्वितीयः,
बन्धमोक्षयोर्व्युत्क्रमताप्रसङ्गात्, शुद्धेरसाध्यत्वेन विचारादि-
नैष्फल्याच्च; तृतीयस्तु न शुद्धेर्नित्यस्वरूपैक्ये स्यात्; निरव-
१०५ धिकत्वसावधिकत्वयोर्नित्यवैरात्, अतिरेके च स एव
सत्यासत्यविकल्पावतार इति. यद्यप्यस्मन्मते नित्यशुद्ध
ईश्वरः साध्यशुद्धिः चेतनश्च जिज्ञास्येते, तथापि न अति-

बन्दी; ईश्वरशुद्धेरसाध्यत्वात्, जीवशुद्धेस्साध्याया अपि स्वरूपान्यत्वात् सत्यत्वाच्च; उदारगुणसागरः परमपुरुषः
११० स्वाराधनात्मकशास्त्रार्थसम्प्रीतस्त्रिवर्गमपवर्गञ्च प्रयच्छतीति हि प्राचीमर्यादा, स यदि स्वयमेव भ्राम्येत् स्वाश्रितचाणौपयिकगुणहीनो वा न तर्हि जिज्ञास्यः, "स्वरचणेऽप्यशक्तस्ये"ति न्यायात्, कल्पितसार्वज्ञ्यादि योगात् तदभावेऽपि तीर्थादिवद्वा तस्य भजनम् स्यादिति चेन्न;
११५ कल्पितस्य सार्वज्ञ्यादेर्जिनादिष्वपि सिद्धेस्तदुपसत्तिप्रसङ्गात्; सर्वेष्वेषु न तत्कॢप्तिरिति चेन्न; अविशेषात्; महाजनपरिग्रहाद्विशेष इति चेन्न; सर्वेषां सर्वतस्सम्प्रूढलमिच्छतां क्वचिदपि प्रामाणिकत्वादिलचणमहत्त्वस्यासिद्धेः, प्राचुर्यस्य विगानादप्रयोजकत्वाच्च. यत्तु तीर्थादिवदिति,
१२० तत्तदामद्यैत, यदि तत्सेवयेव तदुपसत्त्या(तदुपास्त्या)प्रसाद्योऽन्यः; न हि क्रियातच्छक्त्यपूर्वाण्येव फलन्तीति नैगमः पन्थाः; उक्तन्यायेन जैननगन्थिवेदान्तिमतेऽपिजिज्ञासानुपपत्तिर्द्रष्टव्या. तदेतदखिलमन्तर्निधाय ब्रह्मशब्दाभिधेयमुभयलिङ्गं सर्वेश्वरं प्रस्तुत्य तस्यैवारम्भसूत्रे विवचितत्वमाह
१२५ "तापत्रयातुरैरमृतत्वाय. स एव जिज्ञास्य" इति ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्य्यस्य कृतिषु शतदूषण्याम्
जिज्ञासानुपपत्तिवादो द्वितीयः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ।

शतदूषण्याम्

## ऐकशास्त्र्यसमर्थनवादस्तृतीयः ।

त्रय्यन्ताः कर्मभागेन सौहार्दं समधिश्रिताः ।
मुक्तिं यद्भजनादाहुस्तमनन्तमुपास्महे ॥

**स्थितन्ता**वदध्ययनविधिनाऽध्यापनविधिनावाप्रयुक्तमध्ययनं साङ्गसशिरस्क (कृत्स्न) स्वाध्यायविषयमिति. रागतो
5 विधितोवाप्रयुक्तस्तदर्थविचारोपि कृत्स्नगोचरः; तयोस्सङ्कोचकाभावात्, **ननु** विधिप्रयुक्तौ माभूत्सङ्कोचः, रागप्रयुक्तौ तु स्यात्, यावद्रागम् प्रवृत्त्युपपत्तेः, मैवम् विकल्पासहत्वात्; किं ब्रह्मणि विचारसङ्कोचः किं वाकर्मणि; नाद्यः, पुरुषस्य चतुर्ष्वपि पुरुषार्थेषु रागसंभवात्, **क्रमेण** भोगसंभवे विरो-
10 धाभावाच्च. सन्ति ह्युभयभावनास्तथाविधाः. **यस्य तु** काचित्कोऽरागः तस्यैकदेशविचारे का विचिकित्सेति चेन्न; **यस्य** लोकायतोपसृतमतेर्द्विवर्गमात्रनिष्ठस्य वेदोदितेषु चतुर्ष्वप्यनास्था, यस्य चाशक्तिरापद्वा, तस्य केतिप्रसङ्गात्. अस्त्वनर्हस्यानधिकारः स्वार्हं प्रति प्रवृत्तामीमांसेति चेत् **तुल्यं** त्रिका-
15 ण्ड्यामपि. **तिष्ठतु** पुरुषार्थरागः, कृत्स्नप्रवचनादिरागादपि कृत्स्नविचारस्समस्ति; तेन न ब्रह्ममात्रेविचारसङ्कोचः. **कर्म**-**मात्रे** च विचारं सङ्कोचयन् कबन्धमीमांसकस्तु **राहुमी**-

मांसकैरपि प्रतिवक्तव्यः, **सिद्धेऽपि** व्युत्पत्तिसंभवात्, **अप्राप्ते** स्वतः पुमर्थे च विषयेप्रवृत्त्यनङ्गत्वेपि श्रवणादियोगात्, **अर्थ-**
२० **ज्ञानस्य** स्वतन्त्रत्वे **उपायानुष्ठानशेषत्वे**ऽपि **तदुपयोगि** सिद्धार्थबाधायोगाच्चेति. **कर्मशेष**भूतस्यात्मनश्शास्त्रान्तरादिचार इति वदतापि शारीरकं शास्त्रैकदेश इति स्वीकर्तव्यम्, **अन्यत**स्तदयोगात्, तेनैव दन्तिभुक्तकपित्थन्यायेन निस्सार एव वेदान्त इति नास्तिकानां वचनमवधूयते, **अस्तु** तर्हि
२५ अल्पैकविषयतया विचारसङ्कोचः, अतिशयितपुरुषार्थप्रतीतौ "स्थितेरविन्द" इत्यादि न्यायावतारादिति चेन्न; कर्मविचारस्य कैश्चिदप्यननुष्ठानप्रसङ्गात्; **अस्त्विति** चेन्न; प्रत्यक्षविरोधात्. अतिशयितपुरुषार्थप्रतीत्यभावात् कस्यचित्तदुपपत्तिरिति चेन्न; तदभावस्तस्य चर्व्यन्तभागानध्ययनाद्वा
३० **तत्सहकारि**विरहाद्वा; नाद्यः, विधेः कृत्स्नविषयत्वस्यापनात्. न द्वितीयः, साङ्गाध्ययनादेव **तत्रापि** तत्सिद्धेः. न हि साङ्गाध्ययनविधे**स्तत्रैव** पर्यवसानः, अन्यत्रापि तत्प्रसङ्गात्, **तथात्वे** वाक्यशास्त्रारम्भः. **तत्सि**द्धावप्यनादिदुर्वासना-(वशा)दार्त्स्यादपथे प्रवर्तन्ते कर्ममीमांसका इति चेन्नः, त्वयापि
३५ विविदिषा साधनाधिकारे कर्मणां सत्पथत्वस्वीकारात्. **तथापि** तद्विचारंशारीरकशेष इति चेत्सिद्धं शास्त्रैक्यम्, कर्मस्वरूपादिविचारमन्तरेण विविदिषार्थविनियोगायोगात्; **वेदनार्थ**विचारपक्षेऽपि किं पुनः. **भवान्तरी**यसुकृतविशेषक्षपितकषायस्य कस्यचिदर्थेन विविदिषोत्पत्तौ किं तदर्थं

४० (हेतु) कर्मविचारेणेति चेन्न, तथैव कस्यचिदत्यन्तमृदित-
कषायस्य जातिस्मरणादिवत् (रादेः) सिद्धज्ञानतया शारी-
रकेऽप्यनारम्भात्. तदर्हस्य तदारम्भ इति चेत् एवमुभया-
र्हस्य उभयारम्भ इति तुल्यम्, न ह्यनधिकारिणं विधि-
रधिकुरुते; रागोऽपि तथा, न ह्यशक्यनीयमर्थं वेदोऽपि
४५ विदधातीति न्यायात्; यदा च यावज्जीवमनुष्ठेयं ज्ञान-
मपवर्गोपाय इति सेत्स्यति, तदा तदुपचयार्थं तदर्थविविदि-
षानुवृत्त्यर्थं वा सत्कर्मणां नित्यानुष्ठेयत्वेन विचारोऽवश्यम्भावी,
न च जन्मान्तरकर्मबलाद्यावज्जीवं विविदिषा स्यादिति नि-
श्चेतुं शक्यम्, प्राक्तनैरद्यतनैर्वा प्रबलैर्विरोधिकर्मभिः तत्प्रति-
५० बन्धशङ्कयापि नित्यं सत्कर्मणां सङ्ग्राह्यत्वात्, अन्यथा प्राक्तने-
रेव कर्मभिर्वृष्टिः स्यादिति कारीर्यादिकन्नानुष्ठीयेत. न च
नित्यनैमित्तिकविधिर्विविदिषोत्पत्त्यानिवर्तते, वर्णाश्रमादि-
निबन्धनत्वात्तस्य, वर्णाश्रमाद्यभिमाननिवृत्त्या तन्निवृत्ति-
रिति चेत्, केयमभिमाननिवृत्तिः, किन्तद्भ्रमस्य निवृत्तिः
५५ उत स्वसमवेतत्वभ्रमस्य निवृत्तिः, किं वा देहात्मतादात्म्य-
भ्रमस्य निवृत्तिः, अथवा वर्णाश्रमाद्याश्रय पिण्डसम्बन्ध-
भ्रान्तिनिवृत्तिः, अथवा पिण्डस्यैव निवृत्तिः, नाद्यः,
असिद्धेः, न द्वितीयः, कर्ममीमांसकानामपि पारलौकि-
कात्मविदां वर्णादेस्स्वसमवेतत्व भ्रमाभावेन कर्मणामधिकार्य-
६० भावप्रसङ्गात्, नहि देहात्मभ्रमवन्तमतिधर्मोपदेशः. न
तृतीयः, भ्रमनिवृत्तिर्हि देहातिरिक्तात्मविश्रम्भौपयिकतया

पारलौकिककर्मानुष्ठानयोग्यतामेवावच्छेदिति कथन्तया सा निवर्तते. न चतुर्थः, **तत्सम्बन्ध**स्य सत्यत्वेन भ्रमत्वासिद्धेः. न पञ्चमः, ब्रह्मविचारस्याप्यनारम्भप्रसङ्गात्, प्रत्यक्षादिविरोधाच्च,

६५ वास्तवनिवृत्तिमात्रविवक्षायामविरोध इति चेन्न, तस्य कर्माधिकारदशायामपिभवता स्वीकारात्, किञ्च **यावता** कर्माधिकारोनिवर्तत इति मनुषे तावता वेदान्तश्रवणाद्यधिकारोऽपि निवर्तत इति ब्रह्ममीमांसैव न स्यात्, न चायमिष्टप्रसङ्गः, तत्त्वज्ञानोदयात्पूर्वन्तदनभ्युपगमात्. **ननु कर्म**

७० मीमांसाया वेदान्तविचारानुपयुक्तत्वान्न तथा सहास्यैकशास्त्यमिति चेन्न, अनुपयोगासिद्धेः, कोऽसावुपयोग इति चेत् **न्यायोप**जीवनन्तावत्, तथाहि, **बाह्यान्तरनिमि**त्ताप्रामाण्यनिराकरणेन प्रमाणलक्षणन्तावत्**कृत्स्नो**पयुक्तम्, **भेदल**क्षणोपजीवी च गुणोपसंहार पादः, **तार्तीयाश्च**

७५ श्रुतिलिङ्गादयस्सार्वत्रिकाः, **प्रयुक्तिश्च** वर्णाश्रमादिधर्माणां विद्याप्रयुक्तत्वाश्रमप्रयुक्तत्वादिविमर्शे निविशते, **गतिचिन्ता**याश्च पाञ्चमिकः क्रमः, **कर्ता** विद्याधिकारचिन्तने विशेष्यते, **अतिदेशा**दयश्च "तदेवरूपं यदमुष्यरूपम्" इत्यादिषु, अतः कर्ममीमांसानिरूपितस्वरूपैस्तत्तन्न्यायैरेव हि

८० वेदान्तार्थो विचार्यन्ते, अपूर्वास्त्वत्र कतिपयेन्यायाः, **विद्या**ङ्गभूतयज्ञादिस्वरूपशिक्षणञ्च ; अन्यथा "यज्ञेने"त्यादिवाक्यार्थानवबोधप्रसङ्गात्, **न** ह्यविदितपदार्थविशेषो वाक्यार्थावबोधी स्यात्, **यज्ञादिकल्पनञ्च** तत्र तत्र क्रियते, तदपि यज्ञा-

दिस्वरूपनिरूपण सापेक्षम्. यच्चातिशयितपुरुषार्थप्रतीत्या
८५ तदर्थी वेदान्तभाग एव प्रवर्त्ततामिति, तच्चेयम्प्रतीतिः
किमापातसम्भवा उत निर्णयात्मिका, न प्रथमः, "अपाम
सोमममृता अभूम, अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं-
भवती"ति कर्मभागेऽप्यक्षयफलापातोपलम्भात्, ब्रह्मभागेऽपि
"न प्रेत्य संज्ञास्ती"त्यादिभिरपुरुषार्थापातोपलम्भात्; ननु
९० पूर्वापरवाक्यानुगुण्यात्तेषां स्तुतिमात्रपरत्वम्, अस्य तु
वाक्यस्य तस्मादेव परमपुरुषार्थ एव तात्पर्यमिति वैषम्य-
मस्तीति चेत्, किन्तेन, अप्रमितत्वेन विचारनियमम्प्र-
त्यनुपकारकत्वात्. न द्वितीयः, मीमांसयाविनातदसिद्धेः;
तत्त्वविदुपदेशात् तत्सिद्धिस्सम्भवतीति चेत्, तर्हि ब्रह्म-
९५ मीमांसाया अप्यनारम्भस्स्यात्, तदुपदेशत एव ब्रह्मस्वरूप-
सिद्धेः, तत एव भ्रमनिवृत्तेश्च; अत एकस्यैव पुरुषस्य
वेदोदितसर्वपुरुषार्थयो(गि)ग्यतामाश्रित्य एकव्याख्येय व्या-
ख्यानात्मना विंशतिलक्षणमेकंशास्त्रमिति. एतेनार्थप्रयो-
जनाधिकारिभेदाच्छास्त्रभेद इति निरस्तम्, सामान्यतो
१०० वेदार्थपुरुषार्थतदर्थित्वरूपेण तेषामभेदाभिद्धेः, अवान्तरार्थ-
भेदादेश्शास्त्रैक्येऽप्यविरोधात्, अन्यथा षष्ठाध्यायादिभेदेऽपि
भिन्नशास्त्रत्वप्रसङ्गात्, नं चैवं वेदार्थानुबन्धित्वाविशेषा-
द्विद्यास्थानभेदविलयप्रसङ्ग इति वाच्यम्, उपकारभेदेन
तद्भेद व्यवस्थापनात्, अतएव हीतिहासपुराणयोरदूर-
१०५ विप्रकर्षादेकविद्यास्थानत्वनियमः; न च धर्मशास्त्रस्येतरान

महर्षिभिः पृथक्परिसंख्यानम्, तथापि भिन्नकर्तृकयोः कथमेकप्रबन्धत्वमिति चेन्न, एकेनापि कर्त्राऽनेककार्यारम्भदर्शनात्, अनेकैरप्येकरथगोपुरप्राकारादिनिर्माणदर्शनाच्च; निबन्धनेष्वयं विशेष इति चेन्न, तत्राप्येकेन विदुषाऽनेक-
११० प्रबन्धकरणदर्शनात्, पाणिनीयवृत्ति कादम्बरीप्रभृतिषु चानेककर्तृकत्वेऽप्येकप्रबन्धत्व सम्प्रतिपत्तेश्च, तत्र कर्तृभेदे किम्प्रमाणमिति चेत्, कर्मब्रह्ममीमांसयोरपि वा किम्, उपदेशपारम्पर्यमिति चेत्तुल्यम्; अस्तु तर्ह्यर्थविरोधात् भेद इति चेत्, कोऽसौ विरोधः, द्वैताद्वैतगोचरत्वमिति चेन्न,
११५ तयोरेकनिष्ठत्वासिद्धेः, न हि कर्मकाण्डनिरूपितफलकरणेतिकर्तव्यतादीनामैक्यम्ब्रह्मैक्यादिविषयेषु वेदान्तेष्वभिधीयते, तत्सत्यत्वमिथ्यात्वप्रतिपादनाद्विरोध इति चेन्न, वेदान्तभागस्य प्रपञ्चमिथ्यात्वतात्पर्याभ्युपगमे कर्मभागस्य तत्सत्यत्वप्रतिपादनतात्पर्यासिद्धेः, सत्यत्वाभावेऽपि हि त्वदु-
१२० क्तव्यावहारिकमर्यादया फलकरणभावादिकन्निरूपयितुं शक्यते, अन्यथा वेदान्तविचारस्यापि प्रमाण तर्कादिभेदसापेक्षत्वेन स्वव्याघातप्रसङ्गः. सगुणब्रह्मोपासन तत्फलादिचिन्तनमपि शास्त्रान्तरसाध्यं स्यात्; यदा त्वस्मदुक्त न्यायेन सकलकर्मसमाराध्यमनन्तगुणविभूतिकम्ब्रह्म वेदान्तवेद्यन्तदा
१२५ तु न विरोधगन्धोऽपि; निरीश्वरत्व सेश्वरत्वाभ्यां विरोध इति चेन्न, जैमिनिसूत्रेष्वीश्वरप्रतिक्षेपादर्शनात्, अर्वाचीन व्याख्यातृजल्पितानान्तु अनादरणीयत्वात्, अतएव सेश्वर-

मीमांसापक्षोऽपि नातीव विच्छिन्नः, परैरनूद्यते च, देव-
ताकाण्डञ्च कर्मकाण्डशेषतया भाष्यकारैः परिगृहीतम्,
१३० "तदुक्तं सङ्कर्ष" इति तत्रत्यसूत्राणि चोदाहरन्ति. तस्य च
काण्डस्योपसंहारे "अन्ते हरौ तद्दर्शनात्" इति देवताका-
ण्डप्रदर्श्ये "स विष्णुराह हि" इति सर्वदेवताराधनानान्त-
त्पर्यवसानाय तस्य सर्वान्तरात्मत्वेन व्याप्तिप्रतिपाद्य "तम्ब्र-
ह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते" इति तस्यैव वेदान्त
१३५ वेद्यपरब्रह्मत्वोपक्षेपेणोपसंहारात्. सामान्यतो विशेषत-
श्चेश्वरः प्रस्तुत इति तत्त्वविदां सम्प्रदायः. अतएव कर्म-
काण्डदेवताधिकरणमपि कर्मप्राशस्त्यमात्रपरम्, किमलौ-
किकदेवताविग्रहादिसमर्थनप्रयासेन, यथाश्रुतकर्मण एव
फलप्रदत्वशक्तिरित्येतावतैवोक्तेन परप्रतिक्षेपात्, अश्रुत
१४० वेदान्तानामप्रोक्षनासिद्धेश्च, सहसा च (गूढा) गुह्यार्था-
नामवचनीयत्वात्. एवं सति ब्रह्मकाण्डदेवताधिकरणैकरस्य
सि(द्धि)द्धेः, द्रव्यदेवतयोर्द्रव्यबलीयस्त्ववर्णनमपि न देवता-
विग्रहाद्यपारमार्थ्यलिङ्गम्, प्रतीति सन्निकर्षविप्रकर्षाभ्यामेव
प्राबल्यदौर्बल्यसिद्धेः. यद्यपि द्रव्यस्यापि धर्मत्वम्परोक्षम्,
१४५ अथापि स्वरूपतः प्रत्यक्षतया विशेषोऽस्त्येव, एवं सर्वत्रा-
विरोधस्सेश्वरमीमांसायामनुसन्धातव्यः. तथापि "मध्वा-
दिष्वसम्भवादनधिकारञ्जैमिनिः, धर्मञ्जैमिनिरत एव,
शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः, परामर्श-
ञ्जैमिनिरचोदनाच्चापवदति हि, परञ्जैमिनिर्मुख्यत्वात्,

१५० ब्राह्मेण जैमिनिरुपन्यासादिभ्यः, भावञ्जैमिनिर्विकल्पा-
मननात्," इति सूत्रेषु जैमिनिमतस्य पूर्वपक्षत्वेनोपपाद-
नात् विरोधस्सिद्ध इति चेन्न, अत्यल्पतराप्रधानार्थविवा-
दस्य प्रधानभेदकत्वाभावात्, अतएव हि शास्त्रेषु
वार्तिकावतारः, किम्पूर्वकृतप्रासादखण्डे विषमांशाप-
१५५ नयनेन शेषनिर्माणे तदैक्यन्नास्ति, अतः प्रतिसंस्कारे-
णाऽपि सन्धानम्. यद्वा वैभवोक्तेषु तत्त्वभ्रमोमन्दधि-
यामाभूदिति तदनुवादप्रतिक्षेपौ, "तदुक्तन्तदुक्त"मिति
जैमिनिपरिग्रह एव बहुशो दृश्यते, विशेषतस्तु, "साक्षा-
दप्यविरोधञ्जैमिनिः, सम्पत्तेरिति जैमिनिस्तथा हि दर्श-
१६० यति, अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैव-
मेके, तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपा-
भावेभ्यः," इति सूत्रेषु भगवता बादरायणेन स्वाभिमतार्थ-
स्थापनाय जैमिनिस्स्वनाम्नैवोपात्तः. स च भगवान् जैमिनिः
"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानमुपदेशो-
१६५ ऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणम्बादरायणस्यानपेक्षत्वात्"
इति स्वोक्तार्थ सम्(प्रति)पत्तये स्वाचार्यम्बादरायणमेव
पुरस्करोति, जैमिनेर्बादरायणशिष्यत्वञ्च महाभारतादिषु
प्रसिद्धम्, "सुमन्तुञ्जैमिनिम्पैलं वैशम्पायनमेव च" इत्या-
दिना; नन्वत्र व्यासस्य शिष्यो जैमिनिरित्युक्तम्, सत्यम्,
१७०. व्यास एवात्र बादरायणः, "द्वीपे बदरिकामिश्रे बादरा-
यणमच्युतम् । पराशरात्सत्यवतीपुत्रंलेभे परन्तपम्" ॥ इति

हि स्मर्यते. व्यासव्यतिरिक्तेऽपि बादरायणसञ्ज्ञा प्रयुक्तेति
चेत्तथापि, "तपो विशिष्टादपि वै वसिष्ठान्मुनिसत्तमात् ।
मन्ये(श्रे)ज्येष्ठतमन्त्वाद्यरहस्य ज्ञानवेदन" इति रहस्यतमार्थ-
१७५ ज्ञापकत्वेन प्रसिद्धिप्रकर्षादेः सम्प्रदायाच्च व्यास एवै
स्वीक्रियते; अतएव हि युष्मद्भूमिकामाश्रिता वाचस्पति-
प्रभृतयोऽपि व्यासमेव ब्रह्मसूत्रकृतमाचख्युः, येषु च सूत्रेषु
पूर्वपक्षतया जैमिनिमतमुक्तम् शारीरके, तेष्वपि देवता-
सद्भावः परब्रह्मसद्भावो मुक्तस्य परब्रह्मसाम्यापत्तिर्विग्रहा-
१८० दिसद्भावस्य प्रतीयते, तदपि च तत्प्रणीतकर्मकाण्डदेवता-
धिकरणादेरन्यपरत्वं स्थिरीकरोति; न ह्यर्वाचीनवज्जै-
मिनिहृदयानभिज्ञस्तदाचार्यो बादरायणः, अतः परस्पर-
सम्मत्या कार्यान्तरेष्विवाचापि यथांशकरणमपि युक्तम्.
तदेतदखिलमभिप्रत्योक्तम्भगवता बोधायनेन, "संहितमेत-
१८५ च्छारीरकञ्जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः"
इति, तदेतदुपादायव्यस्तृणीत च भाष्यकारः. नन्वेतावतापि
कर्मब्रह्ममीमांसयोरैकशास्त्ये प्रबन्धैक्ये वा किम्प्रमाणमुप-
न्यस्तमिति चेत्, किंवा कर्मकाण्डद्वादशाध्याय्यादौ
शारीरकचतुरध्याय्याश्च. प्रत्येकमैकशास्त्ये त्वया निर्णीतम्,
१९० क्रमविशेषनियामकसङ्गतिविशेषविशिष्टाविरुद्धावान्तरार्थ-
शास्त्रान्तरव्यावृत्तासाधारणोपकाराद्वै समप्रकारैकप्रधा-
नार्थत्वमिति चेत्, इदन्तु किम्प्रमाणमिति निपुणैर्भूत्वा
त्वमेव निरूपय, त्यज वा सर्वत्रैक्यम्. तस्मात् "अथातो

धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिश्शब्दादनावृत्तिश्श-

१९५ ब्दात्" इत्येवमन्तङ्कर्मदेवतापरदेवतागोचरतया विभक्त-

काण्डत्रयं विंशतिलक्षणमेकं शास्त्रमिति. तदिदम् "मी-

मांसाशास्त्रम्" इत्यादिना भाष्येण दर्शितमिति.

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वे-

ङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां

ऐकशास्त्र्यसमर्थनवादस्तृतीयः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

———

श्रीमते निगमान्तमहादेशिकाय नमः ।

# शतदूषण्याम्

## अविधेयज्ञानवादभङ्गश्चतुर्थः ।



विधिव्रस्तैर्यत्तत्कथितमविधेयश्रुतिपथै-
र्विधत्ते दुःखाब्धेर्विलयमविधेयामतिरिति ।
तदुद्धूयोपायम्भगवदुपसत्तिम्प्रथयते
नमस्यामस्यामो यतिपरिवृढाय प्रतिकलम् ॥

५ यदेतद्भ्रान्तजनजल्पितम्, समूलस्य संसारस्य संविन्मात्रे परस्मिन् ब्रह्मण्यारोपितत्वाद्लौककलधौतादेरिवाधिष्ठानयाथात्म्याध्यवसायादेव विलयः, न पुनः कर्मणोपासनेन वा विहितेनादृष्टद्वारा; आहुश्च "मणिमन्त्रौषधादिभ्यो दण्डघातादिनापि वा । क्रियते नैव केनापि माया-

१० कुण्डलिखण्डनम्" इति, यत्पुन(रुन्मत्तान्) बंभ्रम्यमाणान् प्रतिभिषज्यते, तदपि तत्रानारोपितत्वाभिमतदोषविशेष मोचणायैव, न पुनस्तद्धीनधीविशेषमात्रसिद्ध मिथ्यापदार्थ निवर्तनाय, दोषे तु शममुपेयुषि स्वरसबाधिततत्त्वज्ञानादेव तन्निवृत्तिः, अत्राप्याहुः "भ्रान्तभेषजनिर्माणन्भ्रान्तेरुप-

१५ शान्तये । किन्तु भ्रान्तिनिदानस्य दोषस्यैवोपशान्तये" इति, नचात्रापि दोषनिवारणाय वेधार्पेचानुप्रवेशः, दोषस्याप्यत्र

दृङ्मात्राधीनसिद्धितया मिथ्यात्वाविशेषेण एकहेलयैव तत्त्वज्ञानेन निवार्यत्वात्, ततश्च,

विश्वमिथ्यात्वविज्ञान(कचा)कुक्षिनिक्षेपभक्षितः । नापेक्ष्यते पुनर्दोषः कर्मायत्तात्मबाध(न)कम् ॥ लौकिकस्य तु

२०

दोषस्य व्यावहारिकव्यवस्था(न)नातिक्रमाद्विषजाद्यवकाशः, यद्यप्यविद्यायामपि भासमाना, तथापि तथाविधत्व-प्रबोधनाय प्रवृत्तत्वाद्वाक्यस्य तावतैवतन्निवृत्त्युपपत्तिः, न च ज्ञानं स्वरूपेण विधातुं शक्यम्, अत एव द्रष्टव्य इत्यपि फलानुवाद इति निरणैषुः, तदर्थतया च न श्रवणादि-

२५

विधिनैरर्थक्यम्, तादर्थ्यञ्च प्रतिबन्धकभेदवासनानिरसन-द्वारेण, तस्याश्च प्रतिबन्धकत्वमसम्भावनाविपरीतसम्भावना-ख्यचित्तविक्षेपहेतुत्वात्, "ब्रह्मवेद" इत्यादौ च ज्ञान-मात्रस्यैव मोक्षहेतुत्वं श्रूयते, नचास्य वाक्यतः सिद्धस्यैव ज्ञानस्य विधेयत्वसम्भवः, अप्राप्ते शास्त्रमर्थवदिति हि न्या-

३०

यविदः. यत्तुनायं सर्प इति बुध्यस्वेत्यादौ भ्रमनिवृत्त्यर्थं ज्ञानविधिवद्दृश्यते, तत्रापि नायं सर्प इत्येतावतैव सिद्धं ज्ञानं, विस्रम्भमभिसन्धाय विधेयवदनूद्यते, यदि च नायं सर्प इत्येतावता भ्रमो न निवर्तेत, तदा जानीहीति परश्शतविधानेऽपि कथन्तन्निवृत्तिः, अतः, "तत्त्वमसि"

३५

इत्याद्युपदेशात्सोऽहमित्यादिरूपेण विवर्तमानयाधियैव विशुद्धाधिष्ठाननिष्ठया समूलभेद भ्रमोन्मूलनमिति .

अत्रब्रूमः, सिद्धे विश्वस्यमिथ्यात्वे धीमात्रात्तन्निवर्तनम् ।

तदेव न घटेतेति यथावदभिधास्यते ॥ यत्तु लौकिकदोष-
४० स्याविद्यायाश्च मिथ्यात्वाविशेषेऽपि व्यावहारिकव्यवस्थया
वैषम्यमुक्तम् तदपि न, मिथ्याभूतानामपि काचा(कामला)-
दिदोषाणां ज्ञानेतरनिवर्त्यत्वे दृष्टे सत्यविद्यायामपि तदवि-
रोधात्. अस्त्वविरोधः, तथापि प्रयोजकोपदेशजन्यज्ञाना-
देव तन्निवृत्त्युपपत्तेः हेत्वन्तरपरिग्रहे कल्पना गौरवमिति
४५ चेन्न; श्रुते तदभावात्, तत्परिग्रह एव तत्प्रसङ्गाच्च,
न हि श्रुतहानन्याय्यम्. ये च ब्रह्मव्यतिरिक्तं सर्व-
मिथ्येति प्रयोजकज्ञानवन्तः, तेऽपि चक्षुरादिगततिमिरा-
दिदोषनाशाय प्रतिभटभङ्गाय च भेषजशस्त्रादीन् प्रयुञ्जाना
दृश्यन्ते, न पुनर्मिथ्यात्वाध्यवसायमहाभेषजम्प्रमाणयन्तो
५० जोषमासते.

आहुश्च, "मायावादिमतस्थाश्च महारोगेण (दूषि)
पीडिताः। मन्त्रेशयानादृश्यन्ते किञ्च भेषजकाङ्क्षिणः॥"
इति, तस्मादविद्यायामपि मिथ्यात्वाध्यवसायस्य प्रयोजको-
पदेशवशात्सिद्धावपि दोषान्तरवदेव ज्ञानेतरहेतुनिवर्त्यत्वा-
५५ विरोधात्तदर्थं कर्माङ्गोपासनविधानं नानुपपन्नम्, उक्तञ्च
वरदराजाचार्यैः, "यथा हरीतकीखादः क्रियते दोषशान्तये।
तद्वद्दुरित शान्त्यर्थङ्क्रियतां हरिकीर्तनम्॥" इति. यत्तूक्तम्
न ज्ञानं स्वरूपेण विधातुं शक्यमिति, तत्किं ज्ञानस्याभाव्य-
रूपतया, उताभावार्थतया, यद्वा साक्षात्प्रयत्नविषयत्वा-
६० भावात्, अथवा साक्षात्पुरुषव्यापारत्वाभावात्, उत सांशभाव-

नानुप्रवेशविरहात्, अन्यस्माद्वा कुतश्चिदिति ; न प्रथमः,
भवत्पक्षे वृत्तिरूपस्य परपक्षे त्वात्मविशेषगुणस्य अस्मत्पक्षे तु
तदवस्थाविशेषरूपस्य करणाधीनतया भाव्यत्वसिद्धेः .

आहुश्च "कादाचित्कस्वभावस्य भाव्यत्वङ्केन वार्यते ।
६५ तस्याकारणजन्यत्वे चार्वाकमतचर्वणम् ॥" इति ; न द्वितीयः,
"ज्ञा अवबोधने" इति भावार्थतयैव पाणिनीय स्मरणात्,
आत्मस्वरूपभूतज्ञानस्य तु विधानप्रसङ्गाभावात् ; न तृतीयः,
प्रयत्नस्याविधेयत्वप्रसङ्गात्, लोके हि स्वाभिमतकार्यार्थम्प्र-
यतेतेति प्रयत्नविषयविधानदर्शनात् ; न चतुर्थः, भावार्था-
७० न्तराणामप्यविधेयत्वप्रसङ्गात् ; न पञ्चमः, यष्टव्य इत्यादौ
यागादेरिव द्रष्टव्य इत्यादौ दर्शनस्यापि तदनुप्रवेशे विरो-
धाभावात् ; नापि षष्ठः ; ज्ञानविधि विरोधिनः कस्यचि-
दन्यस्यापि कुतश्चित्सिद्ध्यभावात् ; किञ्च यदि ज्ञानन्न
विधेयङ्कथन्तर्हि यागादिविधिरपि न भज्येत, यागोऽपि हि
७५ देवतोद्देशेन द्रव्यत्यागात्मा बुद्धिविशेष एव, एवञ्च द्वादशाहे
अविवाक्ये दशमेऽहनि बुद्धिविशेषरूपस्य मानसग्रहादेः कथं
विधेयतेष्यते, कथं वा मनश्चिताद्यग्नीनान्दृष्टिरूपाणान्तत्त्व-
विषयाणाञ्चोपासनानां विधेयत्वमिष्यते, कथञ्च दर्शनार्थत-
यापि श्रवणमनननिदिध्यासनानि विधेयानीच्छसि, तान्यपि
८० ज्ञानविशेषरूपाण्येव ; ननु न तानि ज्ञानरूपाणि, अपि तु
तदर्थव्यापाररूपाणीति चेत् ; तन्न, तदर्थत्वे सत्यपि तेषा-
मपि स्वरूपस्य ज्ञानरूपत्वात्, श्रवणं हि नाम तत्त्वदर्शिन

आचार्याद्याययुक्तार्थ ग्रहणम्, मननमपि तथा एवमेवैत-
दिति युक्तितः प्रतिष्ठापनरूपो व्यवसायः, ध्यानमपि
८५ अनवरतभावनात्मकस्मृतिसन्तानः ; तदेवमेषां ज्ञानभूता-
नामेव यदि विधेयत्वमिष्येत, कथन्द्रष्टव्य इत्यत्र दर्शनस्य
विधेयत्वन्नेष्यते,

**तथाच,** विष्णुर्यष्टव्य इत्यादौ विधिबाधनदर्शनात् ।
सर्वत्र स्याच्च तद्बाधो **दर्शने** वा न बाधनम् ॥ अथच
९० ध्यानफलतया दर्शनमनूद्यत इति मन्यसे, **तदा** मनन-
ध्यानयोरपि पूर्वपूर्व**फलतया**ऽनुवाद इति किन्न कल्प-
यसि ; अस्त्वेवमिति चेन्न, "फलोपकार्यङ्गतया श्रवणादि-
त्रयविधि"रिति युष्माभिः प्रतिपादनात्, तथाचैकत्रैव
विधेयत्वमनुवाद्यत्वञ्चेति **विरोधः,** न हि विरुद्ध त्रिक-
९५ द्वयापत्तिरनुमन्यते तान्त्रिकैः,

उक्तं हि "उद्देशेनानुवादेन प्राधान्येन समन्वितम् ।
उपादानं विधानं वा गुणत्वन्नैव दृश्यते" ॥ इति ; "उपस्थिते-
ऽतस्तद्वचनात्" इति सूत्रोक्तन्यायेनोपासनस्य सांसारिक-
फलोत्तीर्णे, प्राकरणिकस्वरूपाविर्भावपूर्वकनिरतिशयानन्द-
१०० ब्रह्मानुभवाख्ये फले सति द्रष्टव्य इत्यत्र निष्कारणविधि-
भङ्गप्रयासेन दर्शनस्य फलत्वङ्किमर्थङ्कल्प्यते, नियोगसाध्यत्वे
मोक्षस्यानित्यत्वप्रसङ्गादिति चेन्न, मोक्षशब्देन दुःखध्वंस-
स्विवक्षायां साध्यत्वेऽपि नित्यत्वोपपत्तेः, प्रायश्चित्तधर्मसाध्य-
पापध्वंसवच्च, **न च दुःखप्रध्वंसो** मोक्षः, किन्तु दुःख-

१०५ हेतुः सर्वकर्मध्वंसः, दुःखस्य क्षणिकत्वेन स्वयमेव विनाशात्, पुनर्दुःखानुत्पत्तिविवक्षायान्तस्यास्साध्यत्वाभावेन प्रसक्त्यभावः, ब्रह्मस्वरूपविवक्षायामपि तेनैव दत्तोत्तरत्वम्, न ह्युनादिसिद्धम्ब्रह्मोपायसाध्यमित्यनुन्मत्तो ब्रवीति, स्वरूपाविर्भाव विवक्षायामपि नियोगविशेषादत्यन्तनिवृत्ते
११० प्रतिबन्धे स्वरूपमात्राधीनस्य स्वरूपाविर्भावस्य स्वरूपवन्नित्यत्वात् पुनः प्रतिबन्धाभावाच्चानिवर्त्यत्वमुपपद्यते. ननु यद्युपासनविधेः फलतया मोक्षः स्वीक्रियते तर्हि श्रवणमननदर्शनविधीनां किम्फलमिति चेन्न, श्रोतव्यो मन्तव्य इत्यनयोर्विधित्वाभावात्, द्रष्टव्य इत्यस्य तु पृथग्विधित्वा-
११५ भावात्, निदिध्यासनापरपर्यायमुपासनमेव दर्शनरूपन्तस्मिन्वाक्ये विधेयम्; तथा हि, श्रवणन्तावत् साङ्ग सशिरस्क स्वाध्यायाध्ययनजनितापातप्रतीतिविदितपुरुषार्थतत्साधननिर्णयार्थिनः पुरुषस्य रागत एव सिद्धमिति न तत्र विध्यपेक्षा, श्रवणप्रतिष्ठार्थत्वान्मननस्य तदपि तत एव सिद्ध-
१२० मिति न तत्रापि, अतो यथावस्थितवाक्यार्थाध्यवसायस्य ध्यानोपकारकत्वात् तज्जनकयोश्श्रवणमननयोरिहानुवाद एव, ध्यानन्त्वप्राप्तत्वाद्विधेयमेव; यद्यपि स्वाच्च विषयस्यानुकूलत्वात्तच्चिन्तनेऽपि रागस्सम्भवति, तथापि तत्तद्गुणविशेषविशिष्टस्याहरहरनुवर्तनीयस्य साङ्गस्य तस्य फल-
१२५ साधनत्वधियमन्तरेण तथाविधविशिष्टानुष्ठानस्य रागप्राप्तत्वन सम्भवति, सा च धीस्सोदनयैव, तन्मूलस्य रागो यागादि-

ऽपि समानो विधेरपेक्षितश्चेति न दोषः. ननु यदि ध्यानोपकारकतया श्रवणमननयोरनुवादस्तर्हि द्रष्टव्य इत्येव विधिरस्तु, ध्यानन्तु तदुपकारकत्वेन सिद्धत्वाच्छ्रवणादिव-
१३० दनूद्यत इति कल्प्यमिति चेन्न, ध्यानस्य दर्शनोपकारक-
त्वद्धिमदृष्टद्वारा उत दृष्टद्वारा, न पूर्वः, तस्य चोदना-
मन्तरेणासिद्धेः, उत्तरत्रापि दर्शनशब्देन किञ्चाक्षुषं ज्ञानं
विवक्षितम्, उत प्रत्यक्षमात्रम्, यद्वा प्रत्यक्षसमानाकार-
मिति, आद्ये "न चक्षुषा गृह्यते नापि वाचा, मनसा तु
१३५ विशुद्धेन" इत्यादिश्रुतिविरोधः, द्वितीयेऽपि किं लौकि-
कप्रत्यक्षम्, उत योगि प्रत्यक्षम्, पूर्वत्र ध्यानस्य लौकिक-
प्रत्यक्षजनकतायामन्वयव्यतिरेकाद्यभावेन अदृष्टद्वारा तत्सि-
द्धौ तत्रापि चित्रापशुफलत्वादाविव विध्यपेक्षैव, भावना-
बलजन्तु प्रत्यक्षत्वाभ्युपगच्छामः, तस्य च "वृक्षे वृक्षे च
१४० पश्यामो"त्यादिवत् भ्रान्तौ स्मृति वैशद्यमात्रे वा पर्यव-
सानात्, न भ्रान्तिरनङ्गीकारात्, नापि स्मृति वैशद्यमस्मा-
त्पक्षाङ्गीकारप्रसङ्गात्, इत(उत्त)रत्र तु योगिप्रत्यक्षस्य
प्रकृष्टादृष्टजन्यत्वात् तन्मूलविध्यपेक्षायान्निदिध्यासितव्य इत्य-
यमेवात्र विधिरङ्गीकार्यः, तृतीये तु द्रष्टव्य इत्यनेन
१४५ ध्यानस्यैव वैशद्यलक्षणविशेषविधानमिति तदेव सामान्यतो
निदिध्यासितव्य इत्युच्यत इति वैशद्यविशिष्टध्यानसिद्धौ
ध्यानदर्शनयोस्साध्यसाधनभावाभावात् कथन्दर्शनार्थतया
ध्यानानुवादः; नन्वेवमस्तु ध्यानस्य विधेयता, दर्शनन्तु

योगिप्रत्यक्षात्मकं पृथग्विधेयमिति किन्नाङ्गीक्रियते, पृथक्-
१५० फलनिर्देशाभावादिति न वक्तव्यं, मोक्षार्थतया विधेयस्य
दर्शनस्य प्रधानत्वे तन्निर्वर्तकतया ध्यानस्यापि विधाने
पृथक्फलनैरपेक्ष्यात्, प्रधानवाक्यार्थैक्योपपत्तेश्च ; अन्यथा
दर्शनशब्दस्य मुख्यार्थभङ्गश्चेति चेत्, मैवम्, "ध्रुवा स्मृतिः,
स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति क्वचिद्ध्रुवानु
१५५ स्मृतेः साक्षात्सर्वग्रन्थिविमोक्षहेतुत्वं श्रूयते स्मृतिलम्भ इति
सप्तम्या, क्वचित्तु, "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्व-
संशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥"
इति दर्शनस्य तथैव फलसाधनत्वं श्रूयते, अनयोर्न ताव-
देकफलसाधनयोर्विकल्पः, गुरुलघुविकल्पायोगात्, अधि-
१६० कारिभेदेन व्यवस्थितविकल्पकल्पनायामतिगौरवम्, विक-
ल्पकल्पना तद्व्यवस्थाकल्पना चेति, किञ्च विकल्पस्य प्रयोग-
त्रयेण प्रामाण्यत्यागाप्रामाण्यस्वीकारत्यक्तप्रामाण्यस्वीकार-
स्वीकृताप्रामाण्यपरित्यागावृत्तिरूपाष्टदोषदुष्टत्वादन्याय्यत्व-
मेव, नापि समुच्चयः, यौगपद्यस्याशक्यत्वात्, क्रमे-
१६५ ऽप्युपकार्योपकारकयोरुपकार्यस्य फलहेतोरङ्गिनः स्वाङ्गेन
सहसमुच्चयायोगात्, न च क्रमिकयोरपि दर्शपूर्णमा-
सयोरिव ध्रुवानुस्मृति दर्शनयोरेककरणत्वम्, तदुपस्थापक
श्रुत्याद्यभावात्, न चाङ्गभूतायान्ध्रुवानुस्मृतावङ्गिनो दर्श-
नस्यैव फलश्रीत्यत इति न विरोध इति वाच्यम्,
१७० अङ्गाङ्गिभावस्याद्याप्यनिश्चितत्वात्, दृष्टद्वारस्यासिद्धेः, अदृष्ट-

द्वारकल्पने गौरवात्, स्वतः प्रतीयमानार्थभङ्गे च श्रुत-
हानिदोषात्, न चात्र प्रजापतिवाक्यनयः, भूयसाम्नाय-
विरोधात्, "द्वैधे बहूनां वचनम्" इति तान्त्रिकाः,
भूयांसि हि वाक्यानि ध्यानोपासनादिशब्दैः ध्रुवानुस्मृति-
१७५ मेव मोक्षसाधनमभिदधति, न केवलं श्रुतिरेव, स्मृतीति-
हासपुराणसर्वोत्तरतन्त्रयोगसाङ्ख्यशास्त्राण्यपि, दर्शनन्त्वल्पवा-
क्यावसितम्, एवमीश्वरोपासनस्यैव भूयोभिर्वाक्यैर्मोक्षसाधन-
त्वावसायात् तदन्यनिषेध श्रुतिसामर्थ्यात् क्वाचित्क जीवोपा-
सनानाम्मोक्षसाधनतया श्रुतानां यथा लिङ्गञ्जीवविशिष्ट-
१८० परमात्मविषयतया अङ्गतया वा निर्वाहः, अत्र तु न
तथेति विशेषः, अतः परिशेषात् ध्रुवानुस्मृतिदर्शनयो-
रैक्य एव पर्यवसानम्, विस्तृतश्चैतद्भाष्य एव, छागपशुन्यायेन
वेदनध्यानादिशब्दानामुत्तरोत्तरं विश्रान्ति प्रतिपादनात् ;
एवं स्थिते स्मृतिदर्शनशब्दयोर्मुख्यैकार्थासम्भवे कस्य चिदौ-
१८५ पचारिकत्वमवश्याश्रयणीयमिति चावधारिते स्मृतिशब्देन
प्रत्यक्षज्ञानस्योपचारेऽतिशयासिद्धेः दर्शनशब्देन तु स्मृते-
रुपचारे प्रत्यक्षसमानाकारतारूपवैशद्यातिशय (लक्षणविशेष)
सिद्धेश्च दर्शनशब्देन विशदतमाध्रुवानुस्मृति(रेववि) र्विवक्षि-
तेत्यङ्गीक्रियते, अतोऽत्रापि निदिध्यासितव्य इति ध्रुवानु-
१९० स्मृतिविधानात् द्रष्टव्य इत्येतदपि तद्विशेषसमर्पकमिति ;
तेन "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः", "तस्मिन्दृष्टे
परावरे" इत्यत्रच्छागपशुन्यायनिर्णीतोऽर्थः एकस्मिन्नपि

वाक्ये निदिध्यासितव्यो द्रष्टव्य इत्यनयोरप्याम्नायत इति न विरोधः; न च तव्यप्रत्ययद्वयविरोधः, "अग्नये पथि-
१९५ कृते" इत्यादिषु एक(विषय)विधेयत्वे चतुर्थी द्वयवद-विरोधात्. एवं स्थिते यदि वाक्यार्थज्ञानस्य मोक्षोपायता तदोपासनादिविधिनैरर्थक्यन्दुष्परिहरम्, शब्दजन्यप्रत्य-क्षवादस्तु परिहरिष्यते. यत्तु वाक्यार्थज्ञानोत्पत्तौ प्रति-बन्धकभेदवासना निरासद्वारेण श्रवणमननिदिध्यासना-
२०० नामुपकारकत्वमुक्तम्, तदपि हास्यम्, वाक्यस्याकाङ्क्षायोग्य-तासन्निधिपरामर्शमन्तरेणापेक्षणीयान्तराभावात्, सत्यान्तु सामग्र्यां (वाक्यार्थ)ज्ञानानुत्पत्त्यनुपपत्तेः; न च प्रति-बन्धकमपि सामग्रीवैकल्यपर्यवसितम्, (अतस्तन्निवृत्त्यैव सामग्रीपूर्तिरिति वाच्यम्,) यथाहुः, "प्रतिबन्धोऽपि(वि)
२०५ सामग्री तद्धेतु(ः) प्रतिबन्धकः।" इति, विपरीतवासनायाः प्रतिबन्धकत्वस्यैवासिद्धेः, सत्यामपि विपरीतसर्पादिवासना-यामाप्तोपदेशलिङ्गादिभिः सर्पादिबाधकन्तत्त्वज्ञानमुत्पद्यते, अतएवासम्भावनाविपरीतसम्भावनाख्यचित्तविक्षेपद्वारा भेद-वासनायाः प्रतिबन्धकत्वमित्येतदपि निरस्तम्; यदि
२१० च भेदवासनानिरसनद्वारेणाद्वैतवाक्यार्थज्ञानोत्पत्तिरिष्यते, तदा न कदाचिदपि तदुत्पत्तिस्स्यति,

उक्तं हि, "यावच्छरीरपातं हि किञ्च वर्तेत वासना। तन्निवृत्तौ कथमपुंसामुन्मीलन निमीलने॥" इति। किञ्चा-नादिकालोपचितानां पटुतरप्रत्ययाभ्यासादरैर्दृढतरनिरू-

हरिः ओम् ।

श्रीमते महाचार्याय नमः ।

# शतदूषणीव्याख्यानम्

## चण्डमारुतः ।

---

## ब्रह्मशब्दवृत्तिनिरूपणं नामप्रथमस्कन्धः ।

---

विश्वस्थिभ्रतिवीर्यखण्डितमहादैत्ये समस्तात्मनि
ज्योतिर्मण्डलभासितत्रिभुवने सर्वं स्वतो द्रष्टरि ।
अस्तु श्रीनृहरौ स्वभीतिविहितस्वाज्ञानिलार्कानले
श्रीमत्याश्रितमृत्युभङ्गचतुरे धीर्मे सदा ब्रह्मणि ॥

५ प्रायश्छादयितुं विनम्रजनतानानापराधज्ञतां
स्वात्मत्यैकवशंवदेन कुहनानिद्रां दधद्धर्मणा ।
धाम्ना सह्यसुतान्तरालपुलिनं रङ्गाश्रयङ्काश्रयत्
लक्ष्मीभूमिनिषेव्यमाणचरणं तत्त्वं परम्मन्महे ॥

पद्मावीरुदुपाश्रयस्तबकितस्रग्भूषणास्त्राम्बरैः
१० भास्वत्पाण्यधराङ्घ्रिपल्लवधरो दोस्स्कन्धविभ्राजितः ।
भक्तानां फलितोऽर्थितैर्मरकतश्यामत्विषा पत्रलो
भद्रायास्तु मुकुन्दकल्पविटपी शेषाद्रिसङ्गी स नः ॥

तापघ्नाय तटित्वते कमलया नित्यानपायद्वये
भक्तानामभिलाषपूरमखिलान्संतर्पुकायार्थिनान् ।
१५ वेतण्डाचलशृङ्गसङ्गिवपुषे भव्याय कृष्णात्मने
जीमूताय चतुर्मुखाध्वरफलीभूताय तस्मै नमः ॥

चरणयुगलमेव यस्य लब्ध्वा
धनमनपायि सुनिर्वृता महान्तः ।
तृणमिव विजहुः पुरान्यदर्थान्
२० अवतु स माङ्घटिकाधराधरेन्द्रः ॥

सीदन्तीनां श्रुतिपरिषदां साधुतत्त्वावबोधे
पीडां लुम्पन्कुमतिकलितां भाष्यपीयूषवर्षैः ।
विश्वत्राणे हरिमभिमुखं सत्यकामं वितन्वन्
पायादस्मान्यतिपरिवृढश्श्रेयसामेकसूतिः ॥

२५ तुरगवदनतेजोबृंहितास्वीयशक्तिः
कविकथकमृगेन्द्रस्सर्वतन्त्रस्वतन्त्रः ।
जयति गुरुरबाधां वेदचूडार्यसंज्ञाम्
अनितरजनलभ्यां लम्भितो रङ्गभर्त्रा ॥

अव्याजसौहृदमशेषजनेषु साक्षात्
३० नारायणो नरवपुर्गुरुरित्यृषीणाम् ।
वाचं समर्थयितुमच्युतमेव जातं
श्रीश्रीनिवासगुरुवर्यमहं भजामि ॥

वेदान्तार्योक्तिभावं भवदुदितपरं कृत्स्नशो नेश्वरोऽहं
वक्तुं बोद्धुं च भेको न हि जलधिगतोऽप्यस्य पारं क्रमेत ।

३५ आम्नायान्तद्वाक्रियायास्तदपि शिरसि मे बिभ्रतोऽध्यात्ममेधां
सूक्ष्मार्थेष्वादधानस्तमनुपकरणैः श्रीनिवासार्य चेतः ॥
क्व वेदान्ताचार्यः क्व च पुनरहं क्वास्य धिषणा
परिच्छेदातीता क्व मम मतिरेषाल्पविषया ।
क्व गम्भीरा तद्वाः क्व मम पृथुकानामिव वचः
४० परन्तद्भक्तिर्मां त्वरयति गिरान्तस्य विवृतौ ॥

चिकीर्षितस्य ग्रन्थस्य कुदृष्टिजनोद्भावितचित्तान्धतमसविध्वं-
सनार्थत्वात्तस्य च तत्त्वज्ञानद्वारकत्वात्तत्त्वज्ञानस्य च भगवत्प्र-
सादाधीनतया तेन विना स्वग्रन्थेनाप्युत्पादयितुमशक्यत्वाच्छा-
स्त्रानुजिघृक्षया तेषु तत्त्वज्ञानोत्पादनद्वारा कुदृष्टिजनमनश्चि-
४५ तान्धतमसविध्वंसनं भगवन्तं प्रार्थयते **समाहार इति,**
जगदुज्जीवनाय भगवता स्वयमेव वेदस्य प्रवर्त्तितत्वात् तस्याध्य-
तत्त्वज्ञानहेतुभूतः प्रसादः स्वप्रार्थनया भगवतो युज्यत एवे-
त्यभिप्रायेण समाहार इत्यादिविशेषणानि, हयवदनोदीरि-
तास्सर्वे शब्दा हलहलत्वेन विवक्षिताः, तदेकदेशास्सामादय
५० इति भावः, सामशब्दो गीतिविशेषवचनः "गीतिषु
सःमाख्ये"तिजैमिनिना सूत्रितत्वात्, अतस्सामाधिकरणभूतो
वेदस्सामवेद इति व्यवह्रियते; एवञ्च सामवेदस्य सामनि-
रूपणीयत्वात् तन्निर्वाहकत्वनिरूपकमुखेनाह **साम्नां समा-
हार इति,** "तेषामृग्यत्रार्थवशेन पादव्यवस्थेति" ऋग्लक्षणा-
५५ भिधानेनार्थस्य ऋग्वेदनिरूपकत्वात् तत्प्रवचनमुखेन तन्नि-
र्वाहकत्वमाह **प्रतिपदमृचामिति,** "शेषे यजुश्शब्द"

इति यजुर्लक्षणे निरूपकान्तराप्रतीतेर्यजुषाम्भामित्युक्तम्, समुदायस्य एकदेशाधारता विवक्षिता, एषां विशेषणानां कृत्स्नस्यापि वेदस्य स्वरूपतो धर्मतः फलतश्च भगवदधीनत्वे
१० तात्पर्यम्, स्वर्गादौ धर्माश्वासुस्वर्यादयः, फलं ज्ञानम्, तत् प्रतिपदमित्यत्र विवक्षितम्; ज्ञानोत्पत्तिप्रतिबन्धकनिरासोऽपि तत एवेत्यभिप्रायेणाह लयः प्रत्यूहानामिति, फलितमाह लहरिविततिरिति, बोधः धर्मभूतज्ञानं स एव जलधिः, तस्य लहरिविततिः भगवत्स्वरूपरूपगुण-
१५ विभूतिविषयकज्ञानावस्थाः, तद्धेतुरिति यावत्, आयुर्घृतमितिवदुपदेशः, कथेति, कथायां प्रवृत्तायाम् निरर्थकदर्पेण क्षुभ्यन्तः न्यायापरामर्शनिबन्धनमिथ्यादर्शनवन्तः, कलिकथकाः पापस्वरूपाः कुदृष्टयः, तेषां कोलाहलः निरर्थकशब्दसमुदायः, ते हि प्रतिज्ञां स्पष्टमुद्घोष्य तत्साधकानाम-
२० पन्यायतया स्पष्टमुदीरयितुमशक्नुवन्तः "वणिकतटिनीवर्षारम्भप्रवाहविडम्बकैरलघुभिरपभ्रंश्यद्भ्रमोपलम्भितडम्बरैः। उपकरणयन्त्येतेबालानुदग्रकुतूहलानुपलनिकरग्रामप्रायैरुपन्यसनक्रमै"-रिति न्यायेनाहोपुरुषिकयाडिम्भान् प्रलोभ्य तेषां स्वान्ते ध्वान्तमुत्पादयन्ति; अनेन परदेवतास्तुत्यात्मकम् प्रार्थनात्म-
२५ कञ्च मङ्गलं कृतं भवति.

वक्ष्यमाणार्थानां भगवद्भाष्यकाराभिमतत्वात् उपादेयतमत्वं विषयञ्च दर्शयन् गुरुस्तुत्यात्मकं मङ्गलमाचरति इदमिति, अमृतशब्देन स्वप्रतिपिपादयिषिता अर्था उच्यन्ते, चिरन्त-

नमस्यती वेदः, चिकुराः (चिकुरबन्धाः) वेदान्ताः, चिकुरा
८० हि मालिन्येन जटीभूता अविविक्तास्तिष्ठन्ति, वेदान्ता अपि
परापादितमालिन्या अविविक्तास्स्थिताः, चिकुरास्सैरन्ध्रिका-
भिर्विविच्यन्ते, वेदान्ता अपि भगवदुक्तिभिर्भेदाभेद घटक-
रूपेण तत्त्वहितपुरुषार्थप्रतिपादनरूपेण स्वरूपरूपगुणविभूति-
प्रतिपादनरूपेण तत्तदर्थप्रतिपादनरूपेण च विविच्यन्ते; यद्वा
८५ सैरन्ध्रिकाविप्रकीर्णान् केशान् एकीकृत्य बध्नन्ति, भगवदुक्त-
योऽप्यापाततो विरुद्धतया प्रतीयमानानि वेदान्तवाक्यान्ये-
ककण्ठीकृत्य ब्रह्मणि बध्नन्ति; अनेन कुदृष्टिनिरसनार्थ-
भाष्यतात्पर्यविषया अर्थास्स्वग्रन्थस्य विषय इत्युक्तं भवति.

चिकीर्षितस्य प्रयोजनन्दर्शयति **प्राचीमिति,** परमत-
९० निरसनं प्रयोजनं, मतान्तरनिरसनस्य तुल्यन्यायसाध्यतया-
र्थज्ञानाधीनत्वेऽपि योगाचारस्वात्मनिरसने नार्थज्ञानापे-
क्षेत्यर्थः.

ज्ञानवह्निस्तु मतान्तरनिरसनमपि सुकरमेवेत्यभिप्रायेणाह
**वाह्याहर्केषिति,** बाह्या वेदवाक्यानि दूषयन्ति, न विगृह्य,
९५ कुदृष्टयस्तु प्रतिवाक्यं दुरर्थकथनेन विगृह्य दूषयन्तीत्य-
भिप्रायेण विग्रहप्रयोगः, यद्यप्येकैकस्मिन्वादे बहूनि दूष-
णानि प्रतिपाद्यन्ते; तथापि निरसनीयैक्येन दूषणानामैक्यं
विवक्षितम्, तेन शतदूषण्युपपद्यते.

**तत्रेति,** तत्र ग्रन्थे; तावत् प्रथमवादे, इदन्निरस्यत
१०० इत्यनेन सम्बध्यते, शास्त्रारम्भ इत्येतदसूत्रयदित्यनेन, अयं

प्राथम्ये हेतुः. **विचारविषयत्वेनेति,** विचारोविषयो यस्य तद्विचारविषयम्, यदिति सूत्रं परामृश्यते, **असूत्र-यदिति,** सूत्रशब्दात् प्रातिपदिकात्तत्करोतीत्यस्मिन्नर्थे "प्रातिपादिकाद्धात्वर्थे" इति णिचि यदसूत्रयदिति प्रयोगः

१०५ पाकं पचतीतिवद्द्रष्टव्यः. यद्वा, यदसूत्रयत्-असूत्र-यदिति यत्-यत्सूत्रणमस्तीत्यर्थः, अत्र-सूत्रणे, अथवा, यदसूत्रयदिति माणवकमुण्डयतीतिवत्, यदिति पदजातं परामृश्यते, यत्पदजातं सूत्रत्वेनाकरोदित्यर्थः, अत्र पद-जाते, अथवा, विचारविषयत्वेनेति षष्ठीतत्पुरुषः, यदिति

११० ब्रह्म, असूत्रयदितिसूत्रेण प्रत्यपादयदित्यर्थः, पर्यायेण अतिक्रामति पर्याययति, दात्रेण लुनाति दात्रयतीतिवत् प्रातिपदिकाद्धात्वर्थे णिज्विधानात्, यद्वा, सूत्र विमोचन इति धातोर्वा चुरादिणिच्येतद्रूपम्, अत्र प्रकाशनम् विवक्षितम्, अत्र-ब्रह्मणि, विचारविषयत्वेन यदसूत्रयदत्रे-

११५ त्यनेन निर्विशेष ब्रह्मणोजिज्ञास्यत्वस्य निरसिष्यमाणत्वात् जिज्ञासाविषयोपस्थापनपरत्वात् ब्रह्मपदस्य न निर्विशेष-ब्रह्मलक्षणात्र युज्यत इति सूच्यते; परोक्तवृत्तिप्रद्वेषे निमि-त्तान्तरमाह **सूत्रकृदिति,** परोक्तवृत्त्यङ्गीकारे "अथातो ब्रह्मजिज्ञासे" त्यारभ्य "अनावृत्तिश्शब्दादनावृत्तिश्शब्दा"-

१२० दित्यन्तं सूत्रमसङ्गतं स्यादिति भावः; निर्विशेषब्रह्मणस्स्व-प्रकाशत्वेनाभ्युपगमात् अजिज्ञास्यत्वादाद्यं सूत्रमनुपपन्नम्, अनवधारणत्वापरोक्षवृत्तिकल्पनादीनि च ब्रिम्बप्रलोभना-

नि निरस्यिष्यन्ते; जिज्ञासाभावान्निर्विशेषब्रह्मस्वरूपविरुद्ध-
सविशेषप्रतिपादनाच्चोत्तरसूत्राणि व्यर्थान्यनुपपन्नानि च,
"परञ्जैमिनिर्मुख्यत्वा"दिति सूत्रासाङ्गत्यं च; तस्मादेवं
१२५ सूत्रं कुर्वतः परोक्तवृत्तिर्नेष्टेति भावः. शास्त्रारम्भ इत्यनेन
प्रणव एव विस्वर इति न्यायस्सूचितः. **ब्रह्मशब्दस्य क्वचिदिति,** ब्रह्मपदेन निर्वचनविरोधस्सूच्यते, शब्दपदेन
प्रसञ्जनीयस्य असाधुत्वस्य अनिष्टत्वं द्योत्यते, "यो हि
शब्दान् जानाति अपशब्दानप्यसौ जानाति, यथैवहि
१३० शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽधर्मः, एकैकस्य हि शब्दस्य
बहवोपभ्रंशाः, किं शब्दोपदेशः कर्तव्यः आहोस्विदपशब्दो-
पदेश" इत्यादौ शब्दशब्दस्य साधुशब्दे प्रयोगात्. **असा-
धुत्वापत्तिरिति,** साधुत्वं हि शक्तिमूलकप्रयोगविषयत्वं,
वृत्तिमत्त्वं वा, अन्यस्यानिर्वचनात्, न तावदनादिप्रयोग-
१३५ विषयत्वं साधुत्वं, "तेऽसुराहेऽलयो हेऽलय इति कुर्वन्तः
पराबभूवुः" इत्यत्रानुकार्ये अरिशब्दापभ्रंशे अलिशब्दे
गतत्वात्, तस्य सादित्वे वेदस्यानित्यसंयोगप्रसङ्गात्; नापि
यज्ञप्रयोगार्हत्वं, "साधुभिर्भाषितव्य"मिति साधुत्वस्यै (व)
तन्निमित्तत्वात्? अतएव न धर्मजनकत्वं, साधुत्वस्यैव
१४० तन्निमित्तत्वात्. अतएव धर्मजनकतावच्छेदकरूपवत्त्वं साधुत्वं
तदवच्छेदकं च घटविषय घटशब्दत्वादिकं, तदवगमस्यानु-
शासनादिति निरस्तं; घटशब्दः प्रयोक्तव्यइत्यादिरूपेण
विधानस्यानन्येनासम्भवेन साधुत्वपुरस्कारेणैव विधानस्य

वाच्यत्वात्; नापि व्याकरणव्युत्पाद्यत्वं, तत् (व्युत्पाद्यत्वं)
१४५ किं विधेयत्वंसाधुत्वेन प्रतिपाद्यमानत्वं वा, नाद्यः प्रातिप-
दिकानामसाधुत्वप्रसङ्गात्, न द्वितीयः, आत्माश्रयात्; तस्मा-
च्छक्त्यभावे तन्मूलकप्रयोगाभावात् तन्मूलकवृत्त्यन्तराभावाच्च
ब्रह्मशब्दस्य न साधुत्वं, अनादिप्रयोगविषयत्वं यज्ञप्रयोगा-
र्हत्वम् अनाद्यनपभ्रष्टत्वं व्याकरणव्युत्पाद्यत्वं वा साधुत्वमित्य-
१५० भ्युपगमेऽपि शक्त्यभावे वृत्त्यन्तरस्याप्यभावेन प्रयोगस्यैवा-
सम्भवात् तदसम्भवेन व्युत्पाद्यत्वासम्भवाच्च शक्तिशून्यस्या-
साधुत्वमेव. किञ्च मुख्यवृत्त्यभावे न साधुत्वसिद्धिः, अनु-
शासनापरिगृहीतत्वात्, तथा हि "सिद्धे शब्दार्थसम्बन्ध"
इत्यर्थसंबन्धिन एव शब्दस्यानुशासनीयतया प्रतिज्ञानात्,
१५५ लक्षणायाश्च शब्दार्थसम्बन्धत्वस्य तवासम्प्रतिपत्तेः, अन्यथा,
"अप्राप्यमनसासहे"ति त्वन्मते लक्षणाया अपि निषेधे वेदा-
न्तानांमूक (अमूलक)त्वप्रसङ्गात्, शब्दस्यार्थेन सह शक्तेरेव
प्राप्तित्वादिति त्वयाभिधानाच्च. लक्षणायास्सम्बन्धत्वेऽपि
मुख्यवृत्त्यभावे न साधुत्वसिद्धिः, तथाहि "सिद्धे शब्दार्थ-
१६० संबन्ध" इत्यादिना शब्दार्थसंबन्धानां नित्यत्व एवानुशासनं
प्रतिज्ञातम् "सिद्धे शब्दे अर्थे सम्बन्धे चेति, अथ
सिद्धशब्दस्य कः पदार्थः, नित्यपर्यायवाची सिद्धशब्दः,
तद्यथा, 'सिद्धा द्यौरिति, अथ वा सन्त्येकपदान्यप्यव-
धारणानि तद्यथा, अब्भक्षो वायुभक्ष इति, अपएव
१६५ भक्षयति वायुमेव भक्षयतीति, एवमिहापि सिद्ध एव न

साध्य इति; अथवा पूर्वपदलोपोऽत्रद्रष्टव्यः, अत्यन्त-
सिद्धस्सिद्ध इति, तद्यथा, देवदत्तोदत्तस्सत्यभामाभामेति";
इति शब्दार्थतत्सम्बन्धविशेषणीभूतस्य सिद्धपदस्य नित्यवा-
चित्वप्रतिपादनात्; तत्र किम्मुख्यस्सम्बन्धोमुख्यंस्वार्थौविवक्षितः
१७० उतामुख्योऽपीति विमर्शे सर्वत्र मुख्यार्थस्य तत्सम्बन्धस्य च
स्वरूपेण प्रवाहरूपेण वा नित्यत्वात् मञ्चाः क्रोशन्तीत्यादौ
मञ्चविशेषस्य पुरुषाणां तत्सम्बन्धस्य चानित्यत्वदर्शनेन
लाक्षणिकार्थतत्सम्बन्धयोरतथात्वान्मुख्य एवेति निश्चिन्वन्ति
विपश्चितः. ननु स्यादेवं, यदि प्रकरणादिना मुख्यार्थविशेषो-
१७५ पस्थित्यनन्तरं तत्सम्बन्धिनि लक्षणा स्यात्, न चैवं; किन्तु
शक्यतावच्छेदकावच्छिन्नमात्रोपस्थितौ सत्यां तत्सम्बन्धिन-
स्सामान्ये च लक्षणयोपस्थिते प्रकरणादिना लक्ष्यव्यक्तिवि-
शेषलाभः, तस्माल्लाक्षणिकस्यापि प्रवाहरूपेण नित्यत्वमिति
चेन्न; अनन्तव्यक्तिषु लक्षणाकल्पनापेक्षया प्रकृतव्यक्तिविशेष
१८० एव लक्षणाकल्पने लाघवात्; किञ्च अपूर्वव्यक्तिलाभानुरोधेन
शक्तेस्सामान्यतः कल्पनीयामपि तात्पर्यानुसारेण कल्पनीया-
या लक्षणायास्तात्पर्यविषयीभूतव्यक्तिविशेषातिरिक्तविषय-
त्वकल्पने मानाभावात्; किञ्च मुख्येऽमुख्ये वा शब्दप्रत्याय्या-
कारेण प्रवाहानादिता वाच्या, अन्यथा प्रमेयत्वरूपेण प्रवा-
१८५ हनित्यतायास्सर्वत्र वक्तुं शक्यत्वात्, एवञ्च व्यक्तिविशेषमात्र-
नियताकारविशिष्टलक्ष्यार्थविवक्षायां तत्पुरस्कारेण प्रवाहा-
नादित्वं वक्तुमशक्यम्, किञ्च सामान्यतस्सर्वशक्तस्यापि यद्-

च्छाशब्दस्य पुरुषेच्छया व्यक्तिविशेषे सङ्कुचितशक्तेस्तद्व्यक्तिमा-
त्रोपस्थापकस्य तत्सम्बन्धिनि लक्षणया प्रवृत्तौ तद्व्यक्तिमात्रस्यैव
१९० लक्ष्यतया तत्रानित्यत्वं सिद्धमेव. नन्वपभ्रंशानुकरणस्यासाधुत्वं
स्यात्, 'तदर्थस्यापभ्रंशस्य साद्त्विात्, न चेष्टापत्तिः, कुमा-
र्य्युतक इत्याहेत्यादावपभ्रंशानुकरणे साधुत्वसमर्थनादिति
चेन्न; कुमार्य्युतक इत्याहेत्यत्र पदानुकरणाभावात्, वर्णा
एव हि तत्र क्रमेण अनुक्रियन्ते, एवञ्च भाष्ये "प्रकृतिवदनु-
१९५ करणं भवती"त्यपशब्दानुकरणस्यापशब्दत्वमाशङ्क्य "अपश-
ब्दत्वस्याननुशिष्यत्वात् नातिदेश" इति पदानुकरणाङ्गी-
कारेण परिहारः प्रौढवादेनेति बोध्यम्; न चैवं सति सर्वत्र
वर्णानुकरणप्रसङ्गः, बाधकबलेन क्वचित् पदानुकरण (कार)
त्यागमात्रेण तदभावेऽपि तत्त्यागस्य निर्मूलत्वात्; यद्वा
२०० अत्र अनुक्रियमाणानुकरणयोरनादित्वमेव, भाष्यकारवचन-
प्रामाण्यात्, शब्दार्थसम्बन्धनित्यत्वस्यानुशासननिमित्ततां वद-
न्नेव हि भाष्यकारः स्तनकशब्दानुकरणस्य साधुत्व माह, अत
एवोक्तं कैयटे "अशक्तिजानुकरणस्य जातिशब्दत्वमिच्छन्ति,
यस्मादनुक्रियमाणे शब्दे या जातिस्समवेता तत्सम्बद्धमनुका-
२०५ र्यमनुकरणं प्रत्याययती"ति. ननु "द्रव्यं हि नित्य"मित्यारभ्य
"हिरण्यक्याचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुप-
मृद्य रुचकाः क्रियन्ते रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते कट-
काकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते पुनरावृत्तस्सुवर्णपिण्डः
पुनरपरया आकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः,

२१० आकृतिरन्यान्या च भवति, द्रव्यं पुनस्तदेव, आकृत्युपमर्देन द्रव्यमेवावशिष्यत" इत्यादिना संस्थानस्यानित्यत्वेऽपि द्रव्यस्य स्वरूपतो नित्यत्वप्रतिपादनान्मतभेदेन तदपि नित्यत्वमनुशासननिमित्तमिति प्रतीयते, तथा च लौकिकेऽपि इदं नित्यत्वमस्तीति कथन्नानुशिष्यत इति चेन्न; शब्दप्रयोगस्य
२१५ तत्प्रयोगविषयस्य चानादित्वे प्रकरणतात्पर्यात्, उदाहृतभाष्ये च गुणादावुक्तनित्यत्वाभावादुक्तयुक्तेश्च नैतन्नित्यत्वमनुशिष्यत्वनिमित्ततयोक्तं, किन्तु प्रवृत्तिनिमित्तविशिष्टतत्तद्व्यक्त्यविनाशित्वमेव नित्यत्वमिति न, किन्त्वन्यदपीति नित्यत्वप्रकारभेदमात्रनिदर्शनतयैतन्नित्यत्वमुक्तम्, अतः प्रवृत्तिनिमित्त-
२२० विशिष्टस्य स्वरूपेण प्रवाहरूपेण वा नित्यत्वमनुशिष्यत्वनिमित्तमिति. किञ्च "किं पुनः पदार्थमत्रैषविग्रहः क्रियते सिद्धे शब्दे अर्थे सम्बन्धे चेती"ति प्रश्नो मुख्यार्थस्यैवानुशासननिमित्ततां साधयति "सिद्धे शब्दार्थसम्बन्ध" इत्यत्रानुशासननिमित्ततयोक्तोऽर्थो यदि मुख्योऽमुख्यश्च, तदा किं पदार्थ-
२२५ मिति व्यक्त्याकृत्योरन्यतरव्यवस्थाविषयः प्रश्नो नोपपद्यते, अन्यतरस्य मुख्यार्थत्वे इतरस्य लक्ष्यार्थत्वेनाचेष्यत्वेन वा उभयोरप्यर्थत्वात्; एवं व्यवस्थानुपपत्तेरेव "आकृतिमित्याह" इत्युत्तरवाक्यं, मतान्तरावष्टम्भेन "द्रव्य एव पदार्थ एष विग्रहोन्याय्य" इति वाक्यञ्च मुख्यार्थस्यैवानुशासन-
२३० निमित्ततां साधयति; किञ्च कर्मपदार्थमित्यत्र द्रव्यस्यैव पदार्थत्वाश्रयस्य चानित्यत्वादर्थनित्यत्वं नोपपद्यत इति हि

प्रष्टुरभिप्रायः, यदि चामुख्यार्थोऽप्यनुशासननिमित्तं स्यात्, तदा द्रव्यार्थत्वेऽप्याकृतिलक्षणायास्सम्भवेनार्थनित्यत्वोपपत्तेः प्रश्नोनोपपन्नः; अतएव द्रव्यपदार्थकत्वे अर्थनित्यत्वासम्भ-
२३५ वत्वा आकृत्यर्थावलम्बिनेन "आकृतिमित्याहेति" परिहारस्य नोपपद्यते; एतेन मन्त्राः क्रोशन्तीत्यादौ लाक्षणिकार्थसम्बन्धस्यानित्यत्वेऽपि ब्रह्मणो नित्यत्वात् तत्सम्बन्धस्यापि नित्यत्वात् ब्रह्मशब्दस्य केवललाक्षणिकत्वेऽप्यनुशासनमुपपद्यत एवेति निरस्तम्; शब्दार्थसम्बन्धविभाजको-
२४० पाध्यवच्छेदेन सम्बन्धावच्छिन्नार्थनित्यत्वस्य विवक्षितत्वात्, अन्यथा, अर्थनित्यत्वमात्रविवक्षायां द्रव्यानित्यत्वेनार्थानित्यत्वशङ्कानुपपत्तेः, द्रव्यार्थत्वेऽपि आकृतिलक्षणायास्सम्भवात्; भवति च शक्यत्वावच्छेदेनैव तत्तद्बोध्याकारेण नित्यत्वम्, लक्ष्यार्थे तु नैवम्, सम्बन्धविभाजकोपाधिभूतलक्षणात्वेन
२४५ नित्यत्वानवच्छेदे (दात्) मञ्चविशेषसम्बन्धिपुरुषविशेषस्यानित्यत्वेन तत्रापि लक्षणाया विद्यमानतयातिप्रसक्तत्वात्, न च, प्रश्नस्य कथं व्यवस्थाविषयता, अर्थमात्रस्य नित्यत्वाक्षेपसम्भवादिति वाच्यम्, "अथ वा किन्न एतेन इदन्नित्यमिदमनित्यमिति यन्नित्यं तं पदार्थम्मत्वैषविग्रहः क्रियत"
२५० इत्युत्तरभाष्यस्वारस्यानुरोधेन प्रश्नस्य व्यवस्थाविषयत्वावगमात्, किञ्च "त्रयी च शब्दानां प्रवृत्तिः जातिशब्दा गुणशब्दाः क्रियाशब्दा इति, न सन्ति यदृच्छाशब्दाः" इति पक्षे, "चतुष्टयी शब्दानां प्रवृत्तिः जातिशब्दा गुणशब्दाः

क्रियाशब्दा यदृच्छाशब्दाश्चतुर्थाः" इति पक्षेऽपि ब्रह्मशब्दस्य
२५५ कृत्वाद्यनन्तर्भावान्नानुशिष्यता सम्भवः; अपि च "बृंहेर्नोऽच्च"
इत्यत्रोणादित्वेन संज्ञाधिकारात् ब्रह्मशब्दस्य संज्ञायामेवानु-
शिष्टत्वात् केवलत्वाचणिकत्वे च संज्ञात्वाभावादनुशासनं न
स्यादिति. **साधुत्वस्येति,** तत्त्वमिथ्यात्वादिति भावः. व्या-
वहारिकमर्यादया तत्त्वव्यवस्थामभ्युपगच्छतस्तव व्याहतमिदं
२६० वचनमित्याह **हन्तेति,** शक्त्यभावात् ब्रह्मशब्दे साधुत्वस्य
तुच्छत्वमेवास्माभिरापादितं, मिथ्यात्वाङ्गीकारमात्रेण ब्रह्म-
पदे साधुत्वस्य तुच्छत्वमप्यङ्गीकृतमिति यदि मन्यसे, तदा
शब्दान्तरेऽपि तथैवस्यादिति व्यावहारिकव्यवस्थाभङ्ग इति
भावः. यद्वा किमयम्मिथ्याशब्दोऽनिर्वचनीयवचन उत तुच्छ-
२६५ तावचन इति विकल्पमभिप्रेत्य आद्ये दोषमाह **हन्तेति,**
इदं सर्वेषामपि शब्दानां साधारणम्, न चैतदस्माभिरा-
पाद्यते, किन्तु शब्दान्तरेषु कृत्प्रयोजकस्याभावात् तुच्छत्व-
मेव ब्रह्मशब्दे साधुत्वस्यापाद्यते, न चात्रेष्टापत्त्या परिहार-
सम्भव इत्यर्थः; द्वितीयं दूषयति **साध्वसाध्विति.** यद्वा
२७० प्रथमशिरसो दूषणं बहिरेवोक्तप्रकारेणानुसन्धेयं, द्वितीये
दोषमाह **हन्तेत्यारभ्यवेदैरित्यन्तेन, सर्वशब्दा-
साधुत्वमिति,** साध्वसाधुविवेकोनस्यादित्यर्थः, न चात्रे-
ष्टापत्तिरित्याह **साध्वसाध्विति,** साधुत्वप्रतिपादनार्थ-
त्वात् व्याकरणस्य तत्त्वावद्ध्यर्थं स्यात्, दृष्टप्रयोजनद्वाराङ्गत्वेन
२७५ सम्प्रतिपन्नस्य व्याकरणस्य तत्प्रयोजनानङ्गीकारे तुल्यन्या-

यतथाङ्गान्तरप्रयोजनानामप्यसिद्धौ तेषामपि व्यर्थता, तुल्य-
न्यायेनैव साध्वसाधुविवेकवत्प्रमाणाप्रमाणविवेकाभावात् वेद
स्यापि प्रमितिजननलक्षणप्रयोजनाभावात् वैयर्थ्यमेवेति-
भावः. यद्वा साध्वसाधुविवेकाभावे "एकश्शब्दस्सुष्ठु प्रयुक्त-
२८० स्स्वर्गेलोकेकामधुग् भवति, आहिताग्निरपशब्दं प्रयुज्यप्राय-
श्चित्तीयां सारस्वतीमिष्टिन्निर्वपेत्, तेऽसुराहेऽलयो हेऽलय
इति कुर्वन्तः पराबभूवुः, तस्माद् ब्राह्मणेन न म्लेच्छि-
तवै, नापभाषितवै, म्लेच्छोह वा एष यदपशब्द" इति
साधुशब्दविधिः प्रायश्चित्तविधिरपशब्दप्रयोगनिषेधोनि-
२८५ न्दार्थवादस्याप्रमाणमिति वेदप्रामाण्योपपादकापौरुषेयत्वा-
देस्तदंशे प्रामाण्यानुपपादकत्वेऽन्यत्रापि तथेति कृत्स्नवेदाप्रा-
माण्ये वेदस्य व्यर्थता प्रमिति जननलक्षणप्रयोजनाभावादिति
तदङ्गानामपि वैयर्थ्यमेवेति भावः; हेऽलयो हेऽलय इति
च "हैहेप्रयोगे हैहयो"रिति विहितप्लुतस्य प्रकृतिभावस्य
२९० चाकरणात्पदद्विर्वचनेकर्तव्ये वाक्यद्विर्वचनाद्रस्थानेलत्वाच्चा-
पशब्दः. दूषणान्तरमाह **मुख्यार्थेति**. तर्हि धूमादिव-
लिङ्गविधया बोधकत्वं स्यात्, कथमबोधकत्वमित्यत्राह.
**लिङ्गत्व इति**, व्याप्तिग्रहाद्यसम्भवादिति भावः. यद्वा,
एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षा-
२९५ दिमत्पदकदम्बकत्वादिति वैशेषिकाद्युक्तरीत्यालिङ्गविधया
बोधकत्वं स्यादित्यत्राह **लिङ्गत्व इति**, अयं भावः, वा-
क्यार्थरूपसंसर्गस्य तथानुमानात् सिद्धावपि न पदार्थभूत

ब्रह्मणस्तथानुमानसम्भवः, सिद्धसाधनात्; ब्रह्मपदस्य वृत्त्यभावेन स्मारकत्वासिद्धेस्तत्र बाधः, अर्थाभावे तन्निबन्धना-
२०० काङ्क्षादेरभावाद्धेत्वसिद्धिश्चेति. **न चेति,** अपौरुषेयत्वादिति भावः. **वाचकत्वाभिमानाद्दिति,** वाचकत्व-भ्रमादित्यर्थः, यस्तु साङ्केतिकत्वमपभ्रंशत्वं वा जानाति तस्याक्षिनिकोचादिवत् सूचकस्साङ्केतिकः, अपभ्रंशाच्च स्ततस्साधुशब्दोबोधक इति भावः. **वृत्तिविकल्पेनेति,**
२०५ किम्मूलभूतश्शब्दोमुख्य उतापभ्रंशः, आद्ये ब्रह्मशब्देन किमपराद्धम्, अवाच्यत्ववचनविरोधश्चोभयत्रतुल्यः, मूलमूलित्वयोर्वैपरीत्यापत्तिश्च; द्वितीयेऽनवस्थेति भावः. **नन्विति,** ब्रह्मशब्दस्यान्यत्रामुख्यत्वस्मरणात् ब्रह्मणश्चावाच्यत्वसमर्थनाच्चेति भावः. **भवानेवेति,** प्रमाणपथविभ्रष्ट इति भावः.
२१० **किन्त्वैवमिति,** एवं सति-मुख्यवृत्तिं विनापि क्वचिल्लक्षणाङ्गीकार इत्यर्थः, अविशेषादिति भावः. **महामीमांसकेनेति,** लक्षोऽप्युत्कटमीमांसकाभिमानेन केनचिदित्यर्थः. तदेवोपपादयति **को हीति,** ब्रह्मणोमुख्यार्थत्वं सिद्धवत्कृत्य प्रौढवादेनोपालभते **मुख्यार्थैति,** मुख्यार्थस्य
२१५ शून्यत्वोक्तेः प्रतीतिविषयत्वोक्तेश्चेतिभावः. यद्वा मुख्यार्थाभावे तन्मूलवृत्त्यन्तरस्याप्यभावेन बोधकत्वानुपपत्तेर्ब्रह्मणो मुख्यत्वाभावोक्तौ प्रमाणाभावस्यैव पर्यवसानात् ब्रह्मणस्तुच्छत्वमेव समर्थितं स्यादित्याह **मुख्यार्थैति. मुखान्तरेणेति,**-शब्दान्तरेणेत्यर्थः. महिमकल्पनं निरस्यति **अवाच्येति,**

२२० "अवाच्यवादांश्च बहूनवदिष्यन्तितवाहिताः" इति वचनं स्मार्यते, अत्र चावाच्यवादा गर्हावाक्यानि, तेन परैः (रैः) ब्रह्मणि द्वैषादेवावाच्यमित्यादिगर्हारूपाः प्रलापाः कृता इति ध्वनितम्. **निर्निमित्तत्व इति,** निमित्तं विना मुख्यवृत्त्ययोगादितिभावः. यदृच्छाशब्दस्य निर्निमित्तत्वा-
२२५ भ्युपगमेऽप्यस्य तद्वहिर्भावात् न निर्निमित्तत्वसम्भव इत्याह **न चायमिति. मानाभावादिति,** तथा व्यवहारा-भावादित्यर्थः. **निरुक्तिविरोधाच्चेति,** अपौरुषेयत्व-विरोधादिति चकारस्य भावः, पुरुषसङ्केताधीनशक्त्य-वच्छेदाभावात्. **ब्रह्मगुणलेशयोगादिति,** तथा च
२३० निमित्ततयोक्तबृहत्त्वबृंहणत्वे तत्र न स्त इति भावः. **अभाषीति,** अतोऽसम्भवोदोष इति शेषः, प्रकृत्यादौ ब्रह्मशब्दस्य गौणत्वस्य भाषितत्वाद्ब्रह्मणोऽन्यत्र सनि-मित्तत्वपक्षेऽसम्भव एव दोष इत्यर्थः. गौणत्वे हेतुमाह **अनुवृत्तस्येत्यादि, बृहदादि शब्दवदिति,** सप्तम्यन्तात्
२३५ "तत्र तस्येवे"ति वतिः, बृहत्त्व बृंहणत्वे बृहदादिशब्देष्विव ब्रह्मशब्देऽपि ब्रह्मव्यतिरिक्तेऽपि प्रयोगमापादयत इत्यर्थः, आदिशब्देन बृंहकादिशब्दपरिग्रहः. यद्वा तृतीयान्तात् "तेन तुल्यं क्रिया चेद्वति"रिति वतिः, बृहदादिशब्दो यथातिप्रसक्तः एवं बृहत्त्व बृंहणत्वयोरप्यतिप्रसक्तत्वादि-
२४० त्यर्थः, अतिप्रसक्तविषयनिर्देशार्थं बृहदादिशब्दवदित्युक्तं, बृहदादिशब्दो येषु प्रयुज्यते तेषु बृहत्त्वादिकमतिप्रसक्त-

मित्यर्थः. भगवच्छब्दनयादिति, आचार्यैर्हि "उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिती"त्यादिना अलौकिकार्थसाक्षात्कर्तृत्वमेव
२४५ भगवच्छब्दप्रवृत्तिनिमित्तमित्याशङ्क्य समाधिपर्यन्तयोग-काष्ठा निष्ठेष्वग्निध्वजखाण्डिक्यादिभ्यः प्रयोगाविषयेभ्यो व्यावृत्तत्वाभावात् तदुपचारद्वारमात्रन्न प्रवृत्तिनिमित्त-मित्यनुगृहीतं, तन्न्यायेनात्रापि ब्रह्मशब्दप्रयोगाविषया-काशादिष्वपि लोकोत्तरबृहत्त्वस्य सत्त्वेन न प्रवृत्तिनिमित्तत्वं
२५० किन्तूपचारद्वारत्वमेवेति भावः. अनुवृत्तस्येत्यादि हेतूनाम-भाषीत्यनेनान्वयः, एतत्सर्वमभिप्रेत्याभाषीतिभावः. अन्य-थेति, न्यायमतिलङ्घ्यापि शक्तिकल्पने. यत्साक्षादिति, "ब्रह्मशब्दस्य परमात्मासाधारणत्वेऽपि प्रत्यगात्मन्यपि कदा-चिदुपचरितप्रयोगदर्शनात् तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं
२५५ यत्साक्षाद् ब्रह्मेति विशेषणं क्रियते" इति भाष्येण साक्षा-त्पदस्य मुख्यार्थतावगमादिति भावः. ननु "द्वे ब्रह्मणी" इति प(रापरा)रमात्मात्मनोर्ब्रह्मशब्दप्रयोगात् युगपद्-वृत्तिद्वयासम्भवात् सर्वत्रैकप्रवृत्तिनिमित्तपुरस्कारेण मुख्य-वृत्तिरेष्टव्येत्यत्राह द्वे ब्रह्मणी इति. "गामग्निं ब्राह्मण-
२६ ञ्चेवेति" "चौणी"त्यादेः पूर्वखण्डः, आत्मत्वब्रह्मशब्दप्रयो-गविषयत्वादिना गौणवृत्त्यैवोभयमुपस्थाप्यत इति भावः. ननु कथं वृत्तिद्वयविरोधः "सरूपाणामेकशेष एक विभक्तौ" वित्यत्र तत्समावेशप्रतीतेः, तथाहि "सरूपाणा"मित्यत्र

सरूपत्वं हि समानरूपत्वं, तच "समानानामित्येवास्तु किं
२६५ रूपग्रहणेने"त्याशङ्क्य "अक्रियमाणेरूपग्रहणे यत्र सर्वं समानं
शब्दोऽर्थश्च तत्रैव स्यात्, वृक्षाः प्लक्षा इति, इह न स्यात्
यत्र शब्दस्समानोनार्थः, अक्षाः पादा माषा इति; क्रिय-
माणे पुनारूपग्रहणे यत्र रूपं समानं तत्र सर्वत्र स्यात्
वृक्षावक्षाविती"त्युक्तम्, एवञ्चाक्षावित्यत्र (शि)श्लिष्टेन (नि)-
२७० वृत्तार्थाभिधानं शब्दान्तरेणैव वाच्यम्, यद्यक्षपदप्रयोगविष-
यत्वादिनालक्षणयाभिधानं स्यात्, तदा एकार्थत्वादेवैकशेष-
स्सिद्ध इति नार्थोरूपग्रहणेन, अतो न वृत्तिद्वयविरोध
इति, मैवम्, इन्द्रियत्वविभीतकत्वप्रवृत्तिनिमित्तपुरस्कारेण
प्रवृत्ताक्षपदद्वयद्वन्द्वनिवृत्त्यर्थतया एकशेषविधानोपपत्तेः.
२७५ अथवा अस्तु शक्तिद्वयसमुच्चयः, नैतावता विलम्बिताबि-
लम्बितवृत्तिद्वयसमुच्चयः, अत एव "पितामात्रे"त्यादिकं
प्रत्याख्यातम्, तत्र हि लाक्षणिकेनैकेनैव प्रवृत्तिनिमित्त-
नार्थद्वयबोधनमुपपाद्य विशेषप्रतीतेः प्रकरणादिनान्यथासि-
द्धिमुक्त्वा प्रत्याख्यानं कृतम्,"एवं भिन्नार्थविरूपैकशेषप्रत्या-
२८० ख्यानात् भिन्नार्थसरूपैकशेषविधानार्थस्य रूपग्रहणस्याप्र-
त्याख्यानाच्च उभयशक्ते न लक्षणा, गौरवात्, शक्ताशक्तयोः
शक्तिलक्षणाभ्यां बोधने विलम्बिताविलम्बितवृत्तिद्वयवि-
रोधात्, अशक्तोपस्थापनाय लक्षणाया आवश्यकत्वे सति
तयैवार्थद्वयबोधनोपपत्तौ . शक्तेरपि व्यापारत्वकल्पनायां
२८५ गौरवाच्च, शक्ताशक्तयोरेकेनैवनिमित्तेन लक्षणेत्यवगम्यते ;

अतो विजातीयवृत्तिद्वयविरोध एव. ननु कथमप्रत्याख्यानं, प्रत्याख्यातं हि "स्वरूपाणा"मिति सूत्रं, किन्तेन, न हि रूपग्रहणमात्रं प्रत्याख्यातं, किन्तु सूत्रमेव, अतस्सूत्र स्थापनपक्षे व्यर्थस्य "पितामात्रे"त्यादेः प्रत्याख्यानाद्रूपग्रहणस्या-
३९० प्रत्याख्यानाच्च नोक्तार्थस्य विरोधः, प्रत्याख्यानेऽपि "अभिधानं पुनस्स्वाभाविक"मिति यत्प्रत्याख्यानम् तस्मिन् पक्षेऽपि नोक्तविरोधः, यच्चाकृतिपक्षाश्रयणेन प्रत्याख्यानम् "व्यर्थेषु च सामान्यात् सिद्धम्, अश्नोतेरक्षः पद्यतेः पाद" इति, तत्र शक्तिद्वयस्य समावेशसिद्धावपि विलम्बिताविलम्बित-
३९५ वृत्तिद्वयसमावेशाभावोक्तेर्न विरोधस्सिद्ध्यतीति. शुद्धेति किं स्वरूपातिरिक्तप्रवृत्तिनिमित्ताविशिष्टमुततद्विशिष्टमिति विकल्पोऽभिप्रेतः, प्रथमकोटिं विवृण्वन्नेव दूषयति **न हीति,** शुद्ध इत्येतद्विवरणम् **निर्विशेषतयाभि-**मत इति स्वरूपातिरिक्तप्रवृत्तिनिमित्ताविशिष्टतयाभिमत
४०० इत्यर्थः, प्रवृत्तिनिमित्तमपि हि वाच्यमेव, ततश्च स्वरूपस्यैव वाच्यत्वपक्षे अत्युक्तप्रवृत्तिनिमित्तस्य स्वरूपान्तर्गतत्वाभावे वाच्यत्वाभावेन प्रवृत्तिनिमित्तत्वमेव न स्यादिति स्वरूपान्तर्गतत्वं वाच्यम्, तच्च नास्तीत्यर्थः, **शुद्धेनिमित्त**मास्तीति शुद्धे स्वरूपे निमित्तमान्तर्गतमित्यर्थः ; अभि-
४०५ धानत्वसर्वविवर्त्तमूलत्वे एव वृद्धत्वसंहरणत्वे, ते च स्वरूपान्तर्गते एवेति शङ्कते· **अधिष्ठानत्वेनेति,** अधिष्ठानत्वं भ्रमधर्मित्वम्, विवर्त्तमूलत्वं विवर्त्तोपादानत्वम्, अधिष्ठा-

नत्वेन सर्वतादात्म्यात् तदेव इहत्वं, सर्वविवर्त्तमूलत्वस्य भूतभौतिकरूपेणाविद्याविस्तारयितृत्वरूपत्वात्तदेव इंहणत्व-
४१० मित्यर्थः. तथेति तयोस्स्वरूपान्तर्गतत्वानभ्युपगमादित्यर्थः. अन्यथेति तयोस्स्वरूपान्तर्गतत्व इत्यर्थः. मुक्तावपीति स्वरूपस्यानपायादिति भावः, सर्वतादात्म्यस्य स्वरूपत्वे तस्य मुक्तावनपायात्तस्य च सर्वं विनानुपपत्तेश्च मुक्तावपि सर्वं स्यात्, सर्वविवर्त्तमूलत्वस्य स्वरूपत्वे तस्य मुक्तावपि सत्त्वात्
४१५ मुक्तौ सर्वं स्यात्. ननु न प्रवृत्तिनिमित्तप्रदर्शनार्थं निर्वचनम् किन्तु वाच्योपलक्षकधर्मप्रदर्शनार्थं, गो सदृशो गवय इति गवयत्वप्रवृत्तिनिमित्तकगवयशब्दवाच्योपलक्षक-गोसादृश्यप्रतिपादकवाक्यवदिति शङ्कते उपलक्षणार्थ-मिति. अस्तु तर्हि प्रवृत्तिनिमित्तप्रदर्शनमेव, तच्च स्वरू-
४२० पाश्रितमेव, न चैवं सदितीयत्व प्रसङ्गः, तस्य व्यावहारि-कत्वादिति गूढाभिसन्धिश्शङ्कते अस्त्विति. दूषयति कथन्तर्हीति स्वरूपातिरिक्तप्रवृत्तिनिमित्ताविशिष्टस्वरूप-मात्रपरत्वं न सिध्यतीत्यर्थः. अभिसन्धिमुद्घाटयञ्छङ्कते तदपीति, प्रथमं प्रवृत्तिनिमित्तविशिष्टरूपेणोपस्थापितं
४२५ सत्पश्चात् स्वरूपेणोपस्थाप्यत इत्यर्थः. तर्हीति लाक्षणि-कत्वमेव(त्वादिति) स्यादितिभावः. स्वरूपातिरिक्तप्रवृत्तिनि-मित्तविशिष्टमेव मुख्यमिति द्वितीयं कल्पमनूद्य दूषयति उपहितमिति, सत्यसार्वज्ञ्याद्युपहितमुख्यार्थः, उतमिथ्या-भूताविद्यातत्कार्योपहितमिति विकल्पमभिप्रेत्यप्रथमंशिरो

४३० दूषयति श्रुतीति, द्वितीयन्दूषयति स्वाभिमतेति. यद्वा शुद्धोपहितेत्यत्र किञ्चैतन्यमात्रमुख्यार्थः, उतबिम्बभूतमिति विकल्पोविवक्षितः, आद्यन्दूषयति न हीति निर्विशेषत्वान्नचैतन्येनिमित्तमस्तीत्यर्थः, व्यावहारिकधर्मा अपिबिम्बप्रतिबिम्बयोरेवेतिभावः. सार्वज्ञ्यादेश्चैतन्यमात्रे-
४३५ ऽभावेऽप्यधिष्ठानत्वविवर्त्तमूलत्वे तत्रैव स्याताम्, ते एव शुद्धत्वशबलत्वे इति शङ्कते अधिष्ठानत्वेनेति, अधिष्ठानत्वं विवर्तोपादानत्वञ्च बिम्बस्थानीयब्रह्मण एवेति येषाम्मतम् तान्प्रत्याह तत्रेति. येतु चैतन्यमात्र एवाधिष्ठानत्व सर्वविवर्तमूलत्वे इच्छन्ति तान् प्रत्याह अन्यथेति,
४४० व्यावहारिकस्यैव प्रवृत्तिनिमित्तत्वे प्रातिभासिकस्य रजतादिपदवाच्यत्वाभावापत्तेः, सत्ताविशेषमनपेक्ष्यधर्ममात्रस्य प्रवृत्तिनिमित्तत्वे प्रातिभासिकपीतत्वाश्रयशङ्खादेः पीतादिपदवाच्यतापत्तेश्च, धर्मिसमानसत्ताकस्यैव प्रवृत्तिनिमित्तत्वाद्धर्मिणश्च पारमार्थिकतया तयोरपि पारमार्थिकत्वे
४४५ ज्ञानान्निवृत्त्यसम्भवेन ब्रह्मव्यतिरिक्तसत्त्वनिवृत्तिरूपमुक्तिर्नस्यादित्यर्थः. नन्वस्तु व्यावहारिकमेव सार्वज्ञ्यादिकं प्रवृत्तिनिमित्तं तस्य च ज्ञानान्निवृत्तिसम्भवान्न मुक्तेर्मुक्तिरिति गूढाभिसन्धिश्शङ्कते अस्त्विति. दूषयति कथमिति धर्मिसमानसत्ताकस्यैव प्रवृत्तिनिमित्तत्वात् प्रवृत्तिनिमि-
४५० त्तस्य च मिथ्यात्वे पारमार्थिकस्वरूपगतत्वम् न स्यादिति न स्वरूपस्य मुख्यतेत्यर्थः. अभिसन्धिमुद्घाटयति तदपीति

शुद्धमप्यशुद्धान्तर्भावादशुद्धे प्रतीयमाने प्रतीयत इत्यर्थः. तद्वीति नाद्यं केवलशुद्धमुख्यवृत्तिपक्ष इत्यर्थः. तदपीत्यादेः पूर्ववदेव वार्थः. यद्वा मुक्तावपीत्यत्र सत्यत्वसाधनं

४५५ न विवक्षितम्, किन्तु सत्यत्वाभिमानमात्रम्, सम्भवति हि यावन्मिथ्यात्वोक्ति सत्यत्वाभिमानः, एवञ्चोत्तरत्र न गूढ़ाभिसन्धिता, विम्बत्वोपहितमुख्यमिति द्वितीयं पक्षं दूषयति उपहितमिति. किन्तद्विम्बस्थानीयं ब्रह्म सत्यप्रवृत्तिनिमित्तविशिष्टमुतमिथ्याभूतप्रवृत्तिनिमित्तविशिष्ट-

४६० मिति विकल्पमभिप्रेत्य आद्यं दूषयति ऋतीति, द्वितीयन्दूषयति स्वाभिमतेति. यद्वा स्वरूपमेव मुख्यमुताविद्योपहितमिति विकल्पार्थः, शेषं द्वितीयव्याख्यानवदेव. यद्वा अनुपहितमुख्यमुत यत्किञ्चिदुपहितमिति विकल्पार्थः. अज्ञानादीत्यादिपदेन तत्कार्यं विवक्षितम्. अविद्याद्युप-

४६५ हितमुख्यमिति द्वितीयपक्षे दोषान्तरमाह तत्रचेति तत्र अज्ञानादिदोषोपहितत्वे, ब्रह्मशब्दमुख्यार्थो न दोषोपहितः "शुद्ध" इति तमर्थमनूद्य तस्य निर्दोषत्व पुरस्कारेण भगवच्छब्दनिर्वचनविरोधात्, न च ब्रह्मपदलक्ष्ये तन्निर्वचनम्, गुणविशिष्टविषयत्वात्तस्य, भगवच्छब्दस्यापि

४७० तत्र मुख्यत्वायोगाच्चेति भावः. परं ब्रह्मेति न हि दोषवैशिष्ट्याभिधानं स्तुतिः प्रत्युतनिन्दैवेति भावः. पवित्रमिति दोषोपहितस्यापवित्रत्वादिति भावः. परंब्रह्मेत्यत्र ब्रह्मपदेन शुद्धं लक्ष्यत इत्यत्राह निर्विशेषेति.. कथञ्चि-

दिति दोषाभावाभिधानादपि न स्तुतिः, स्वरूपमात्रपर-
४७५ त्वादेवेत्यर्थः. गुणाभिधानेति निर्दोषत्वमपि गुणान्त-
र्भूतम्, किञ्च मुख्यार्थानुपपत्त्यभावान्न लक्षणा. ननु निर्गु-
णत्वस्य श्रुतिस्मृतिसूत्रैः प्रतिपन्नत्वात् गुणानां मिथ्यात्वेन
हेयत्वात् तद्वैमिथ्याभिधाने निन्दैवेति मुख्यार्थानुपपत्त्या
लक्षणायुज्यत इति चेत्तत्राह पूर्वेति. चेति प्रमाणा-
४८० न्तरविसंवादन्यायोपेतस्वपदविरोधौ समुच्चीयेते. यद्वा
दोषाभावमुखेनापि लोकवेदयोस्स्तुतिदर्शनात् "यदा ह्येवैष
एतस्मिन्नुदरमन्तरङ्कुरुते, अथ तस्य भयं भवती"त्यादि-
भिर्भेददर्शनस्य दोषत्वावगमात् निर्गुणवाक्यैस्तद्वैधुर्यस्य
स्वरूपेऽवगमात् भवान् ब्रह्मेति सामानाधिकरण्येन तादृश-
४८५ स्वरूपेणोपस्थितस्याभेदबोधनाद्दोषाभावस्याच कण्ठरवेणा-
प्रतिपादनेऽपि निर्गुणवाक्ये निर्दोषतया प्रसिद्धस्वरूपैक्य-
बोधमात्रे णापि गुणाबोधनेऽपि प्रसिद्धगुणकसम्राडभेदबोध-
नेनेव स्तुत्युपपत्तेरुपस्थितैक्यबोधनस्य बाधेन भवानित्यस्यापि
लक्षणया. स्वरूपपरत्वेऽपि तस्योपस्थितसम्बन्धस्य शब्दादर्थाद्वा
४९० प्रतीत्या मुखादिप्रतीकस्तुत्याऽवयविस्तुतिवदष्टाकपालादि-
स्तुत्यादादशकपालस्तुतिवच्चोपस्थितस्तुतिसिद्धेस्स निर्विशेष-
लक्षणयापि स्तुतिर्न विरुध्यत इति तत्राह पूर्वेति, एवमपि
न स्तुतिसिद्धिः ब्रह्माभेदमात्रस्य सर्वचेतनसाधारणत्वादित्यपि
भावः. यद्वा निर्विशेषस्वरूपस्यैवासिद्धेर्न तल्लक्षणेत्यभिप्राये-
४९५ णाह पूर्वेति. एवमेतावता मुख्यार्थत्यभावान्न लक्षणेति

लक्षकत्वाभिमतशब्दस्वरूपपर्यालोचनया निर्विशेषलक्षणानि-
रस्ता ; इदानीं लक्ष्यत्वाभिमतजिज्ञास्यस्वरूपपर्यालोचनयापि
(निर्विशेष)लक्षणानिराकरोति **अपिचेति**. लक्षणेति
वाक्यपरम्, प्रथमसूत्रस्य ब्रह्मशब्देनापीत्यर्थः, उपस्थितस्य
५०० ज्ञेयत्वेन तस्य जिज्ञास्यत्वेजिज्ञासात्मकलक्षणादिलक्षणानाम्
तदारम्भप्रतिपादकप्रथमसूत्रस्य चोपस्थितपरत्वेन न ब्रह्मशब्दे
लक्षणाश्रयणीया . तत्त्वावेदकानामुपस्थितपरत्वाङ्गीकारे
अपसिद्धान्त इति द्योतयति **तत्त्वावेद**केति. **अतद्व्यु-**
त्पन्नेनेति ब्रह्मणोन्यत्र मुख्यवृत्त्यसम्भवस्य उक्तत्वेन ब्रह्मबोध-
५०५ कस्य तच्छक्तत्वमेव वक्तव्यमितिभावः, एवञ्च प्रतिज्ञालक्षण-
शोधनानि न सम्भवन्तीति तात्पर्यम्. अत्र ततोऽन्यत्रा-
मुख्यस्य तद्बोधकत्वं तन्मुख्यवृत्त्यैवेति नियमो विवक्षितः.
अन्यत्रामुख्यत्वेऽप्युपस्थिते मुख्येन तत्सम्बन्धादनुपस्थितं लक्ष्य-
तामिति शङ्कते **तल्लक्षित**मिति. **जिज्ञास्यत** इति
५१० जिज्ञास्यतया प्रतिज्ञायते, लक्ष्यते "जन्माद्यस्य यत" इति,
शोध्यते, उत्तरसूत्रैः. **ज्ञातत्वेति** ज्ञातत्वपदन्निर्णयपरम्,
तस्य सिद्धत्वाल्लक्षणशोधने अपि सिद्धप्राये; एवञ्च लक्षण-
शोधनाभ्यां साध्यस्य निर्णयस्य ब्रह्मपदादेव सिद्धा प्रतिज्ञा-
लक्षणशोधनानां वैयर्थ्यमेवेत्यर्थः. विलीनविलापनन्याय-
५१५ माशङ्क्याह **न चेति,** जिज्ञासादौ सूत्रकारस्य जिज्ञास्यत्व-
प्रतिज्ञायां श्रोतुर्विचारे च न विधिरित्यर्थः. ननु शास्त्रस्य
श्रवणात्मकत्वे मननात्मकत्वे वा "श्रोतव्यो मन्तव्य" इति

विधानात्तदर्थत्वाच्च प्रतिज्ञायाः कृत्स्नं शास्त्रं सार्थकमेवेत्याह
**अदृष्टार्थ**त्वाभावादिति, त्वयापि हि श्रवणादेर्दृष्टद्वारत्वमेवे-
५२० ष्यते, न तु केवलादृष्टद्वारत्वमित्यर्थः. यद्वा **अतद्व्युत्पन्ने**-
नेति, ततश्च सामान्यतोऽपि ज्ञानाभावात् तज्ज्ञानेच्छालक्षण-
शोधनानि न सम्भवन्तीत्यर्थः. **जिज्ञास्यत**इति ज्ञातुमिष्यत
इत्येवार्थः, लक्ष्यते शोध्यत इत्येतच्छ्रुत्यादिसाधारणम्,
जिज्ञासाद्यनपेक्षास्यादित्यत्रापि जिज्ञासापदं ज्ञानेच्छापर-
५२५ मेव, जिज्ञासादिविषयिण्यपेक्षा प्रत्याशातवनोपपद्यत इत्यर्थः.
विध्यभावे हेतुमाह **अदृष्टार्थ**त्वाभावादिति, विषयवैल-
क्षण्याधीनाया इच्छाया विध्ययोग्यत्वञ्च विवक्षितम्, येन
विधिना. **सहामेति**, अनुदात्तेत आत्मनेपदविधानस्य
चक्षिङोऽनुदात्तेत्त्वेऽपि ङित्करणेनानित्यत्वज्ञापनात् परस्मै-
५३० पदम्, यद्वा "आधृषाद्वे"ति विकल्पितणिचस्सहेरेतद्रूपम्,
स हि सहिः परस्मैपदी. निर्विशेषलक्षकब्रह्मशब्दात्
ज्ञातत्वसिद्ध्या जिज्ञासाद्यनपेक्षा स्यादित्यत्र शङ्कते **निरु-**
**पाधिक** इति, निरुपाधिक इत्येतत् सार्थमित्यनेन सम्ब-
ध्यते, ब्रह्मशब्दवृत्तिमविदुषः प्रतिबोधनेन निरुपाधिक एव
५३५ विषये लक्षणशोधनात्मकं शास्त्रं सार्थमित्यर्थः. विषय-
भेदमनादृत्य ब्रह्मशब्दमात्रे वृत्तिं विकल्पयति **किमिति**,
**पूर्वेणे**ति, मुख्यवृत्त्याबोधस्योत्तरशास्त्रसार्थक्यार्थता शास्त्रस्य
मुख्यवृत्तिविषयगोचरत्व एव स्यात्, मुख्यवृत्तिविषयस्योप-
हित एवेति शास्त्रस्य तद्बोधनोपक्षीणत्वेनानुपहितस्या-

५४० जिज्ञास्यत्वात् निरुपाधिके सर्वं सार्थमित्यस्य व्याघात इत्यर्थः. अनुपस्थिते मुख्यवृत्त्यङ्गीकारेण सार्थक्यापादनं न सम्भवति अपसिद्धान्तादित्याह अनुपस्थित इति. यद्वा कथं व्याघातः किञ्च प्रस्तुतमित्यत्राह सर्वस्येति, शास्त्रस्योपस्थितविषयत्वेनानुपस्थितस्याजिज्ञास्यत्वाच्च तत्र लक्ष-

५४५ णाश्रयणीयेति प्रक्रान्तानुपस्थितलक्षणाव्याघात इत्यर्थः. अभिधानेति, सिद्धान्तमुख्यस्वरूपमात्रशक्त्यङ्गीकारे न किञ्चित्प्रयोजनम्, न हि विशेषणस्याशक्यतामात्रेण शक्ये स्वरूपे लक्षणोपपादिता भवति, नाप्यवाच्यत्वश्रुतिः, प्रत्युत-विशिष्टशक्त्यङ्गीकार एव विशेष्ये लक्षणा भवति, अतो न

५५० निर्विशेषलक्षणा सिध्यतीत्यर्थः. यद्वा ननु लक्षणशोधनादेः प्राग् ब्रह्मपदेन निरुपाधिकस्वरूपस्योक्तिं नाङ्गीकुर्मः, येनातद्व्युत्पन्नेन तदुक्त्ययोगः, लक्षणया तदुक्तौ जिज्ञासालक्षणादिवैयर्थ्यञ्च स्यात्, किन्तु निरुपाधिके ब्रह्मशब्दवृत्तिमविदुषः प्रत्येव लक्षणशोधनादिकम् सर्वम् प्रवर्त्तत इत्यङ्गी-

५५५ कुर्मः, ततश्च न पूर्वोक्तदोषाविति शङ्कते निरुपाधिक इति, निरुपाधिकशब्दस्य ब्रह्मशब्दवृत्तिमित्यनेनैवान्वयः, निरुपाधिके सार्थमित्येतदर्थसिद्धम्. किञ्च तत्र कारणं कथञ्च तदभाव इत्यत्राह मुख्यार्थेति, मुख्यार्थबाधो मुख्यार्थानुपपत्तिः, आदिशब्देन सम्बन्धः परिगृह्यते, इदं

५६० पदम् मुख्यवृत्तमिति निश्चयः कारणं, तत्र च मुख्यार्थबाधादिनिश्चयो हेतुः, तदभावात्तदभाव इत्यर्थः तत

**इति** उपदेशादित्यर्थः. **तत्सिद्धाविति** उपदेशात् प्रागिति शेषः. **निर्विशेषावगम** इति जात इति शेषः. **मुख्यार्थबाध** इति, मुख्यार्थस्य कृष्णत्वस्य बाधितत्वेन
५६५ मिथ्यात्वात् तस्य मुमुक्षुजिज्ञास्यत्वमनुपपन्नतयावगतमिति भावः. **लक्ष्यार्थेति** अनेन लक्ष्यसामान्यज्ञानं लक्ष्यविशेष-जिज्ञासा च व्यज्यते. **प्रत्यक्षेणेति** स्वमतेनेदम्, परमते-ऽनुपलब्धिनिरासस्याप्युपलक्षणम्. प्रश्नवैयर्थ्ये परिहारमा-शङ्कते **आपातविदितार्थेति**, श्रुती-द्वैताद्वैत श्रुती, ते
५७० एव विप्रतिपत्तिः विरुद्धार्थप्रतिपादकवचनद्वयी. **कीदृ-शभूतमिति** निर्विशेषं सविशेषं वेत्यर्थः. **पृच्छतीति** चेदिति, ततश्च लक्ष्यार्थनिर्विशेषोपदेश उपपन्न इति भावः. **लक्षणाभ्यामिति** वाक्यपरम्. वैलक्षण्यम् अनृ-तादिव्यावृत्त्यात्मकं स्वरूपम्, तटस्थलक्षणेन सविशेषत्व-
५७५ कोटिः स्वरूपलक्षणेन निर्विशेषत्वकोटिश्च सिद्धा; स्वरूप-लक्षणस्य तेन निर्विशेषपरत्वस्याभिमानादित्यर्थः. न सन्देह-स्थलम् प्रत्युतविपरीतनिश्चय एवेत्याह **न चेति**. **सर्व-कारणत्वाच्चित्रमिति** कर्तृत्वाच्चित्रमित्यर्थः, उपादानत्ववत् निमित्तत्वस्यापि तत्र विवक्षितत्वात्. **सर्वज्ञेत्यादि** कारण-
५८० त्वानुपपत्तिलक्षणन्यायमाक्षिप्यात् .सविशेषश्रुतेस्तु विशेषमेव निर्धार्यतेत्यर्थः. **कृष्णस्वमेवेति** निर्वचनोपबृंहितब्रह्मशब्दा-वगतश्चेति भावः. यदा न त्वदभिमतं निर्विशेषं ब्रह्मशब्द-विवक्षितमिति सिध्यति, किन्त्वस्मदभिमतं कृष्णत्वविशिष्ट-

मेवेत्याह सुहृत्त्वमेवेति, सत्यज्ञानादिवाक्येनापि सत्यत्वा-
५८५ दिकमेव निर्धार्यतेति भावः. वैयर्थ्ये परिहारान्तरमा-
शङ्कते नन्विति, अत्र प्रश्नस्य सन्देहमूलत्वानुक्तेर्न पूर्वोक्त-
दोष इति भावः. तल्लक्षणमिति ब्रह्मशब्दविवक्षितस्य
लक्षणं पृच्छतीत्यर्थः. "ब्रह्माधीहि" इत्यस्य ब्रह्मशब्दविव-
क्षितमधीहीत्यर्थ इति भावः. पूर्वमनुपस्थितस्य जिज्ञास्य-
५९० त्वमङ्गीकृत्य लक्षणशोधनादिवैयर्थ्यप्रसङ्गान्न तत्र लक्षणे-
त्युक्तम्, इदानीमनुपस्थितस्य जिज्ञास्यत्वमेवासिद्धमतस्तत्र न
लक्षणेत्याह तदपि नेति. यदा यदि मुमुक्षुभिर्ज्ञातव्यम्
ब्रह्म निर्विशेषमिति निर्धारितं स्यात् तदा तज्जिज्ञासा-
वाक्यस्य तदानुगुण्येन वर्णनीयतया ब्रह्मपदमुख्यार्थप्रश्नस्य
५९५ तदननुगुणत्वात् मुमुक्षुज्ञातव्य ब्रह्मशब्दार्थः क इति लक्ष-
णया प्रश्नसमर्थनं स्यात्, न चैतत् सिद्धम्, अतः "अधी हि
भगवो ब्रह्मेति" पदमुख्यार्थस्यैव प्रश्नपरं, तथाचोक्तप्रकारेण
प्रश्नोऽनुपपन्न इत्यभिप्रायेण परिहरति तदपि नेति.
तमेवं विद्वानिति, आदिशब्देन "तमेवं विदित्वा अति-
६०० मृत्युमेती"त्यादिविवक्षितम्, "तमसस्तु पारे, सर्वाणि
रूपाणी"त्यादिभिर्विभूतिः, "महान्त"मित्यादिभिर्गुणः
"आदित्यवर्ण"मिति विग्रहः "विचित्य" "कृत्वे"ति
व्यापारः प्रतिपाद्यते. विशिष्टेति, तत्पदेन एवमिति च
प्रस्तुत विभूत्यादिवैशिष्ट्यपरामर्शादिति भावः. महा-
६०५ पुरुषेति "पुरुषंमहान्त"मिति वाक्यार्थ उक्तः, एतज्जिज्ञास्य-

पर्यालोचनया निर्विशेषस्य जिज्ञासानर्थक्यादिभिर्जिज्ञास्य-
त्वासम्भवादुपस्थितस्यैव जिज्ञास्यत्वेन न निर्विशेषलक्षणेति.
अत इति, यतो लक्षकत्वाभिमतशब्दस्वरूपपर्यालोचनया
मुख्यवृत्त्यभावे साधुत्वानुपपत्तेस्त्वन्मते मुख्यवृत्तेः काप्यसम्भ-
११० वाच्च तन्मूललक्षणाया अनुपपत्तिः, यतश्च लक्ष्याभिमत-
जिज्ञास्यस्वरूपपर्यालोचनयोपस्थितस्यैव जिज्ञास्यत्वे लक्षणाया
असम्भवः, अतः "बृंहति बृंहयति तस्मादुच्यते परंब्रह्मे"ति
श्रुत्युक्तप्रकार एव ब्रह्मशब्दार्थ इत्यर्थः. सर्वतः-सर्वस्मात्,
अनवधिकातिशयबृहदित्यर्थः. यद्वा सर्वतः सर्वप्रकारेण,
११५ स्वरूपतो गुणतो विभूतितश्चेत्यर्थः. अत्र तत्त्वटीकाया-
मुक्तम् "यत्त्वाथर्वणिकी निरुक्तिः बृंहणत्वमप्याह, "बृंहति
बृंहयति तस्मादुच्यते परंब्रह्मे"ति, पौराणिकी च प्रसिद्धिः,
"बृहत्त्वाद् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयत" इति तद्गोबली-
वर्दन्यायादिति न विरोधः, तेनानवधिकातिशयबृहत्त्वमेव
१२० ब्रह्मशब्दार्थ इत्येके; अपरेतु बृहत्त्ववद् बृंहणत्वमप्यनवधि-
कातिशयम्ब्रह्मशब्दार्थः "बृंहति बृंहयती"ति पृथगभि-
धानस्वारस्यात्, "बृहत्त्वाद् बृंहणत्वाच्चे"ति समुच्चयस्वार-
स्याच्चेत्याचक्षते; वयन्तु ब्रूमः विरोधाभावादुभयथाप्या-
चक्षत" इति. अत्र बृंहणत्वं बृहत्त्वान्तर्गतमेवार्थो न पृथ-
१२५ गिति प्रथमपक्षः, बृहत्त्वं तदनन्तर्भूतम् बृंहणत्वञ्च समु-
च्चितमर्थ इति द्वितीयः, बृहत्त्वान्तर्भावेनापि बृंहणत्वमर्थः,
स्वरूपेणापि, तत्रापि समुच्चितमर्थ इति तृतीयः, प्रति-

पाश्चाकारभेदाच्च पौनरुक्त्यम्, न च गोबलीवर्दन्यायात् सङ्कोचः, तस्य पदान्तरविषयत्वात्, अत उभयथाप्यर्थो दृढ-
१३० णत्वमिति भावः. “चरन्यमृत”मित्युक्तमुपपादयन्नेतद्वाद-
मूलभूतम् भाष्यमाह **इदं सर्वमिति,** यथाश्रुत एव ब्रह्मशब्दार्थः, इदं सर्वमभिप्रेत्याभाष्यतेति वाक्याभ्यामयमर्थः श्रुतोमतश्चेति गम्यते; इदञ्च भाष्यं प्रकाशितमाचार्यैः, “प्रथमविशेषणेन स्वभावतो निरस्तनिखिलदोषत्वादयमेव
१३५ ब्रह्मशब्दवाच्यः नान्यः, न हि कारागृहनिगलित एव तन्मोचनार्थमभ्यर्थनीयः, अतो मुमुक्षूपास्यपरजिज्ञासासूत्रस्थ-
ब्रह्मशब्देन पुरुषोत्तम एवार्थसामर्थ्यात् अभिधीयत इत्यव-
गम्यते. द्वितीयविशेषणेन “यस्मिन्प्रयुज्यमाने तु गुण-
योगस्तु पुष्कलः। तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारत” इति
१४० न्यायेन गुणतोऽपि वृहत्त्वे शब्दशक्तेरसङ्कोचस्सिध्यतीति शब्दशक्तेः पुरुषोत्तम एवाभिधीयत इत्यवगम्यते” इति.
**अनेकनामकमिति,** तन्निरासप्रकारस्तु वेदान्तविजये प्रपञ्चितोऽस्माभिः. **विशेषणद्वयेनेति** “ब्रह्मपरिवृढं सर्वत” इति ब्रह्मशब्दनिरुक्तिः “यस्मात् क्षरमतीतोऽहमक्षरादपि
१४५ चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम” इति पुरुषोत्तमशब्दनिरुक्तिः; एतेन पुरुषोत्तमशब्दो न कर्मधारयः, उत्तमशब्दस्य पूर्वनिपातप्रसङ्गात्; न च षष्ठी-
समासः, “न निर्धारणे” इति निषेधात्; नापि सप्तमी-
समासः, “न निर्धारणे” इति निषेधादेव; न च वाच्यं

६५० षष्ठ्या एवायन्निषेधो न सप्तम्या इति, विशेषाभावेन सप्तम्या अपि निषेधात्, अन्यथा षष्ठीसप्तमीसमासयो रूपतोऽर्थतस्य भेदाभावेन निषेधानर्थक्यात्, अतोऽत्राव-यवार्थनिरुक्तेरसम्भवात् केवलरूढ़ एवायमश्वकर्णादिवत्; तदिदमाह "रूढ्या तु कामम् पुरुषोत्तमोऽस्त्वि"तीति ६५५ निरस्तम्; "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम" इत्यादिनिरुक्त्यनुसारेण "पञ्चमीविभक्ते" इति विहित-पञ्चम्याः "पञ्चमी भयेने"त्यत्र पञ्चमीति योगविभागात् समासोपपत्तेः, योगविभागस्य "तादपि परस्पर" इति भाष्यवाक्यादवगम्यते. विस्तरस्तु वेदान्तविजये द्रष्टव्यः ॥

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगत-परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां श्रुतदूषणीव्याख्यायाम् चण्डमारुताख्यायां ब्रह्मशब्दवृत्तिनिरूपण-नाम प्रथमस्कन्धः ॥

श्रीमते महाचार्याय नमः ।

शतदूषणीव्याख्याने चण्डमारुते

## जिज्ञासानिरूपणं नाम द्वितीयस्कन्धः ।



पदार्थनिरूपणानन्तरं वाक्यार्थनिरूपणस्यौचित्यम् भाष्य-
क्रमस्यानुरोद्धव्यत्वञ्चाभिप्रेत्याह **अथेति**. वादार्थं संगृह्णाति
**स्वात्मेति**, कर्मत्वाभावात् सामान्यविशेषवेदनद्वयविषयत्वा-
भावेन हेतुफलाभावात् जिज्ञासानोपपद्यत इत्याह **स्वात्मैक-**
५ **भावस्येति**, स्वप्रकाशस्यैव स्वगत सामान्यविशेषविषयत्वेन
हेतुफलत्वे स्तामित्यत्राह **स्वात्मेति**. स्वयमेवात्मा स्वात्मा,
जिज्ञासासमानाधिकरणयोरेव सामान्यविशेषज्ञानयोः हेतु-
फलभावात् स्वप्रकाशस्यैवात्मत्वेन सामानाधिकरण्यासम्भवात्
साध्यत्वासम्भवाच्च न हेतुफलभावः, किञ्च निर्विशेषत्वाच्च
१० सामान्यविशेषयोरभावेन न जिज्ञासाहेतुफलसम्भव इत्याह
**निर्विशेषस्येति**. किमविद्योपहितस्य जिज्ञास्यता उत
विशुद्धस्य नाद्य इत्याह **दुष्यत** इति, मिथ्याविषयकज्ञानस्य
निवर्तकत्वासम्भवेन दूष्यमाणत्वासम्भवादिति भावः. द्वितीय-
न्दूषयति **विशुद्धस्येति**, विशुद्धस्य ज्ञप्तिविषयत्वाभावादिति
१५ भावः. निर्विशेषस्येत्यनन्तरं ब्रह्मण इति शेषः, स्वात्मैक-
भावस्य निर्विशेषस्य ब्रह्मणो जिज्ञासा या परेष्टा, सा दुष्यतो
विशुद्धस्यापि प्रतिषिध्यत इत्यन्वयः. जिज्ञासामात्रं खण्डयतः

ब्रह्मजिज्ञासाखण्डनम् नानिष्टमित्याशङ्क्याह **परेष्टेति** यथा-लोकं ब्रह्मण्यपि तस्या दृष्टत्वात्, अन्यथानारम्भेण शास्त्रो-
२० च्छित्तेरिति भावः. अस्मिन् वादे जिज्ञासानुपपत्तिः विचारानुपपत्तिर्वा प्रतिपाद्या, अन्यतरार्थत्वे अन्यतरनिरसन-(मन्या) मार्थम्, अत्र च विचारानुपपत्तिपक्षे जिज्ञासापदं विचारपरं, हेतुफलाभावाज्जिज्ञासानुपपत्तेर्न तत्साध्यविचार-सम्भव इति वा तात्पर्यम्. ब्रह्मपदादेव ब्रह्मणः प्रतीतेः
२५ विचारोऽनुपपन्न इत्यभिप्रायेणोक्तम् **शब्दनिर्दिष्टमिति**. **विचार्यमिति** जिज्ञासानुपपत्तिपक्षे विचारफलकजिज्ञा-साविषय इत्यर्थः. विचारानुपपत्त्या तत्फलकजिज्ञासानु-पपत्तेः जिज्ञासापूर्वकमित्यादिना वक्ष्यमाणायाः प्रदर्शनार्थं विचारफलकत्वोक्तिः. व्याघातस्फोरणार्थं तदभिमतार्थान्तरा-
३० ण्यप्यनुवदति **अनुदितेत्यादिना**, ब्रह्मशब्दनिर्दिष्टस्य वि-चारविषयत्व (विचार्यत्व) मनुदितानस्तमित स्वरूपैकप्रका-शत्वादिकं चाङ्गरित्यर्थः, चकारेण विचार्यत्वस्यानुदितानस्त-मित स्वरूपैकप्रकाशत्वादेश्च विरोधस्सूच्यते, विचित्रोवि-विधः, व्याघातश्चोत्तरत्रानुसन्धेयः. अनुदितेत्यादिपदचतुष्टयेन
३५ स्वात्मैकभासस्येत्यादि श्लोकगतपदचतुष्टयम् क्रमाद्विवृतम्, **अनुदितानस्तमितेति** स्वात्मेति प्रतिपन्नात्मत्वाद्विप्रार्थ उक्तः. स्वरूपैकप्रकाशमित्यनेन सूचितं व्याघातन्दर्शयति **यश्चेति**. **सामान्यत** इति इदञ्च प्रायिकाभिप्रायम्, शब्द-त्वादिना ज्ञाते गुणत्वद्रव्यत्वादिसामान्याकारजिज्ञासादर्शनात्,

४० ततश्च केनचिदाकारेण ज्ञाते केनचिदाकारेणाज्ञाते जिज्ञासे-
त्येवविवक्षितम्, अतएव वक्ष्यति विदिताविदिताकारभेदो
दुस्त्यज इति. **अन्यथे**ति सामान्यविशेषवेदनयोरभावे,
सामान्यविशेषवेदनयोर्जिज्ञासाहेतु फलभावस्य लोकसिद्धत्वा-
दिति भावः. **तदयो**गादिति जिज्ञासायोगादित्यर्थः. तथा-
४५ विधवेदनद्वयविषयत्वाभावेऽपि वृत्तिद्वयविषयत्वम् सम्भवत्येवे-
त्यत्राह **न चे**ति अन्यत्र वेदनद्वयविषय एव जिज्ञासादर्शनात्
वृत्तेश्चावेदनत्वादिति भावः. एवं कर्मत्वाभावे सामान्यविशेष-
वेदनयोरभावेन हेतुफलयोरभावात् जिज्ञासानुपपन्नेत्युक्तम्,
इदानीन्दृश्यत्वादिप्रसङ्गेन प्रमाणविषयत्वानुपपत्त्याविचारास-
५० म्भवेन जिज्ञासानुपपत्तिमाह **जिज्ञासा**पूर्वकमिति. दृश्य-
त्वेत्यनेन अनुदितानस्तमितस्वरूपैकप्रकाशमित्यत्र एकपदत्व-
ध्वाविन्तिकर्मत्वेन व्याघातः प्रदर्शितः, मिथ्यात्वेत्यनेन ज्ञाननि-
वर्त्यत्वपरेण अनस्तमितपदोक्तानिवर्त्यत्वेन व्याघातः प्रकाशितः,
जडत्वेत्यनेनास्वप्रकाशत्वपरेण स्वरूपप्रकाशमित्यनेन व्याघातो
५५ दर्शितः, आदिपदेन प्रकाशानात्मकत्वं गृह्यते, तेन स्वरूपैक-
प्रकाशमित्यत्र प्रकाशत्वेन व्याघातः प्रदर्शितः. विचारानुपप-
त्तिपक्षे तु अस्तु जिज्ञासानुपपत्तिः, विचारानुपपत्तौ किमा-
यातमित्यत्राह **जिज्ञासा**पूर्वकमिति, तथा च जिज्ञासाया
असम्भवे तत्साध्यविचारो नोपपद्यत इति भावः. विचारानु-
६० पपत्तौ हेत्वन्तरमाह **तर्ह्ये**ति. माभूद्ब्रह्मणो वित्तिकर्मत्वम्,
मास्तुसामान्यविशेषवेदनद्वयविषयत्वम्, तथापि स्वरूपप्रकाश-

स्यैव स्वगतसामान्यविशेषविषयत्वेन हेतुफलभावात् जिज्ञासो-
पपद्यत इति पूर्वोक्तव्याघातपरिहारं शङ्कते **स्वरूपेति**
ज्ञानमात्रस्यैव हेतुत्वम् फलत्वञ्च, न तु सामान्यविशेषज्ञानयो-
६५ र्गौरवादित्येवकाराभिप्रायः. **नेति** अन्यथा यज्ञदत्तीयसामा-
न्यज्ञानात् देवदत्तीयविशेषज्ञानफलकजिज्ञासाया विष्णुमित्रे
जननापत्तिरिति भावः. यद्यपि हेतुभूतज्ञानस्य जिज्ञासा-
सामानाधिकरण्यनियमो नास्ति, अहमिति स्वप्रकाशादेव नि-
त्यत्वादिजिज्ञासादर्शनात्, अथापि अहमिति प्रतीतिरन्तः-
७० करणाकारवृत्तिरिति यन्मतम् तदनुसारेण तदुभयेत्युक्तम्,
स्वभिन्नविषयजिज्ञासाभिप्रायेण वा तदुक्तम्. हेतुफलत्वयो
स्सामान्यतो दूषणमुक्त्वा प्रातिस्विकन्दूषणमाह **अनादेः**
प्रकाशस्येत्यदिना अनादित्वभङ्गादित्यन्तेन, किं स्वरूपप्रकाशो
निरपेक्ष एव हेतुरुताग(न्तुं)न्तुकसहकारिणमपेक्ष्येति विकल्प-
७५ मभिप्रेत्यप्रथमे दूषणमाह **अनादेरिति** अत्र जिज्ञासा यदि
निरपेक्षा अनादिप्रकाशजन्या स्यादनादिस्स्यादित्यापादनं वि-
वक्षितम्, तेन नापाद्यापादकयोर्वैयधिकरण्यम्. ननु जन्यत्वा-
नादित्वयोर्विरुद्धत्वेन व्याप्त्यभावात् कथमापाद्यापादक भावः,
न च प्रवाहानादित्वमापाद्यम्, क्रमिकोत्पत्तौ हि प्रवाहः,
८० निरपेक्षजन्यत्वे च विलम्बहेतोरभावेन एकव्यक्त्युत्पत्तिकाल
एव यावद्व्यक्त्युत्पत्तेरावश्यकत्वेन प्रवाहस्यैवासिद्धेः. न च नि-
रपेक्षजन्यत्ववादिनः धारावाहिकस्थले पूर्वज्ञानस्येव उत्तरज्ञान-
म्प्रति पूर्वजिज्ञासाया उत्तरहेतुत्वं वक्तुं शक्यमिति चेन्न,

जिज्ञासा यदि प्रकाशानन्तरभाविनिरपेक्षप्रकाशजन्या स्यात्तर्हि
८५ प्रकाशसमवधानक्षणोत्तरक्षणवर्तिप्रागभावप्रतियोगिनी न स्यात्,
यो यदनन्तरभाविनिरपेक्षयज्जन्यः, स तत्समवधानक्षणोत्तर-
क्षणवर्तिप्रागभावप्रति योगी न भवतीति व्याप्तेरिति तात्प-
र्यात्, तस्य च प्रकाशस्य अनादित्वात् तत्समवधानक्षणोत्तरक्ष-
णवर्ति प्रागभावप्रतियोगित्वाभावे अनादित्वं पर्यवस्यतीत्यभि-
९० प्रायेणानादेः प्रकाशस्येत्युक्तम्. प्रकाशो यदि जिज्ञासासाम-
ग्रीत्वपर्याप्त्यधिकरणं स्यात्, स्वाधिकरणक्षणान्यूनसङ्ख्याकजिज्ञा-
साधिकरणक्षणकस्स्यात्, जिज्ञासाप्रागभावाधिकरणक्षणपूर्वक्ष-
णवर्तीन स्यात्, जिज्ञासाप्रागभावाधिकरणक्षणद्वयवर्तीन स्यात्.
यद्यत् सामग्रीत्वपर्याप्त्यधिकरणम् तत् स्वाधिकरणक्षणान्यूनस-
९५ ङ्ख्याकतदधिकरणक्षणकम् तत्प्रागभावाधिकरणक्षणपूर्वक्षणव-
र्तिन भवति, तत्प्रागभावाधिकरणक्षणद्वयवर्तिन भवतीति च
व्याप्तेरिति वा तात्पर्यम्. अत्र च द्वितीयादयस्तर्काः प्रति-
बन्धकाभावकारणत्वमतेन, अनादिपदस्य पूर्ववदेव प्रयोजनम्,
तथा च निरपेक्षस्य प्रकाशस्यानादेः कारणत्वमेव, न स्यादिति
१०० भावः. यद्वा प्रकाशोत्तरजन्यजन्यत्वाभावे अनादित्वं स्यादि-
ति विवक्षितम्, तत्कुत इत्यपेक्षायामुक्तम् **अनादेरिति**
ततश्चानाद्युत्तरजन्यजन्यत्वाभावे अनादित्वमिति व्याप्तेरात्मा-
दौ दृष्टत्वेन अनादिप्रकाशोत्तरभावि (जन्य) जन्यत्वाभावे
अनादित्वं स्यादिति. न च जन्यत्वाभावस्यैव व्याप्यत्वे शेषवैय-
१०५ र्थ्यम्, अखण्डाभावे तदभावात्. यद्वा जन्यत्वाभावे प्रयोजको

अन्यजन्यत्वाभावः तच्चानाद्युत्तरजन्यजन्यत्वाभाव इति भावः. यद्वा निरपेक्षानादिजन्यत्वोक्तिः जिज्ञासाया अनादित्वे पर्यवस्यति, यस्मिन् काले कार्योत्पत्तिरभिमता, ततः प्रागपि कार्यं स्यात्, कालयोर्विशेषाभावात्, एवं 'पूर्वपूर्वकालेऽपी-
११० त्यापादिते निरपेक्षानादिजन्यत्ववादिना पूर्वं कारणाभावो न वक्तुं शक्य इति अस्यापादनस्यानुद्धारादित्यर्थः. एवञ्चानादित्वे सिद्धे जन्यत्वमेव न सम्भवतीति तात्पर्यम्. यथादर्शनमिति जिज्ञासायास्समानविषयधर्मिज्ञानजन्यत्वस्य लोके दर्शनादिति भावः. ननु यद्यपि धर्मिविषय-
११५ ज्ञानम् लोके दृश्यते, तथापि तस्य धर्मिविषयज्ञानत्वेन न हेतुत्वं, किन्तु धर्मिज्ञानत्वमात्रेण, लाघवात्, तथा च स्वरूपप्रकाश एव हेतुः, न चानादित्वप्रसक्तिः, सापेक्षस्यैव तस्य जिज्ञासाहेतुत्वात्, अपेक्षणीयश्च संशय एवेति चेन्न, स्वरूपप्रकाशेनैव तस्य ज्ञातत्वेन संशयस्यैवानुपपत्तेः. फलत्वदूषण-
१२० माह प्रागसिद्धस्येत्यादि, प्रागसिद्धस्योत्तरकालमसत्त्वे तुच्छत्वं, सत्त्वे कार्यत्वमिति भावः. प्राक्सिद्धत्वपक्षे सिद्धत्वफलत्वयोः परस्परव्याघातमाह प्राक्सिद्धस्येत्यादिना, अनादिपदम् प्राक्सिद्धपरम्. यद्वा स्वरूपप्रकाशस्य फलत्वे दूषणान्तरमाह फलत्व इति, अनादित्वभङ्गाच्चेत्यन्वयः,
१२५ एतेनानुदितपदसूचितव्याघातो दर्शितः. एवम् स्वरूपप्रकाशस्यैव हेतुफलभावासम्भवे अन्वयव्यतिरेकाभ्याञ्जिज्ञासासमानाधिकरणयोः सामान्यविशेषज्ञानयोर्हेतुत्वं फलत्वं चेति

स्थितम्; तत्र शङ्कते **उपहित**रूपेणेति अविद्योपहितरूपेण, **वेदनद्वये**ति मुमुक्षूपास्यत्वेन सामान्यवेदनम्, जगत्का-
१३० रणत्वादिना विशेषवेदनम्. **नेति** निर्विशेषस्य जिज्ञास्यत्वभङ्गापत्तेरिति भावः. **अभ्युपगमे**ऽपीति फलस्यानुपहितविषयत्वावश्यम्भावात् सामान्यविशेषवेदनयोस्समानविषयत्वनियमाच्च हेतोरप्यनुपहितविषयत्वमेव वक्तव्यम्, धर्म्यैक्यमात्रेण समानविषयत्वाद्धेतोरुपहितविषयत्वाभ्युपगमेऽपीत्यर्थः.
१३५ **भ्रान्तेश्चा**संपाद्यत्वादिति, तत्त्वज्ञानसाध्यत्वान्मोक्षस्येति भावः. परीक्षकाः-विचारशास्त्राधिकारिणः. प्राथमिकभ्रान्तिः प्रपञ्चभ्रमः. **प्रागल्भ्य**प्रसङ्गादिति निरर्थकायाससवैधुर्यात् अधिकभ्रान्त्यसंपादनाच्चेति भावः. **स्वरूपे**ति प्रमात्वबुद्ध्या विचारप्रवृत्तावपि विचारदशायामेव कृत्स्नमिथ्यात्वस्य निश्चि-
१४० तत्वेन तत्र प्रमात्वबुद्धिनिवृत्तेः तदुत्पादनार्थं मनननिदिध्यासनादौ प्रवृत्तिर्न स्यादिति भावः. यद्वा त्वन्मते नित्यानित्यवस्तुविवेकदशायामेव ब्रह्मातिरिक्तमिथ्यात्वज्ञानस्य जातत्वात् श्रवणादौ प्रवृत्तिर्न स्यादिति भावः. स्वरूपस्यैव फलत्वे प्राक्सिद्धस्य फलत्वायोगादिति यद्दूषणमुक्त-
१४५ न्तत्परिहारं शङ्कते **नित्येति,** ज्ञानस्य सिद्धत्वेऽपि तद्रूपावच्छिन्नस्यासिद्धत्वाज्जिज्ञासासम्भवत्येवेति भावः. प्राप्ताप्राप्तविवेकेन धर्मस्यैवेच्छा सा च न जिज्ञासा, समाधौ तु तादृशज्ञानस्यासिद्धत्वात् जिज्ञासेत्यभिप्रेत्याह **नेति, सत्यत्वे**ति (धर्म) सत्यत्वे अद्वैतहानिः, मिथ्यात्वे तदर्थं प्रेक्षावत्प्रवृत्त्य-

१५० नुपपत्तिः, न हि मिथ्यावस्त्वमहमानो मुमुक्षु(र्मिथ्योत्पादना य)मिथ्यात्वसंपादनाय प्रवर्तेत. न च वैराग्यादेरविद्यानिवर्तकत्वात् प्रवृत्त्युपपत्तिः, तस्य जडत्वेनानिवर्तकत्वात्, ज्ञानमेवाज्ञाननिवर्तकमिति हि युष्माकमुद्घोषः. तन्मात्रविषयकज्ञानमेव निवर्तकम् न तु धर्म इति चेत्तर्हि तस्य ज्ञान-
१५५ स्यानादित्वादनादिनिवृत्त्यापत्तिः. स्वमात्रसाक्षिज्ञानम् पूर्वमास्त्येव सर्वसाक्षित्वादिति चेत्, हन्तकिमिदानीन्तादृशज्ञानमुत्पद्यते, स्वमात्रसाक्षित्वमुत्पद्यत इति चेत्; तर्हि तदेवाविद्यानिवर्तकमिति पर्यवसितम्. ननु स्वमात्रसाक्षित्वमविद्यानिवर्तकतावच्छेदकमिति चेत्, शुक्त्यादिज्ञानस्याधिष्ठा-
१६० नातिरिक्तविषयस्यापि निवर्तकत्वदर्शनेन अधिष्ठानमात्रविषयत्वस्य निवर्तकतानवच्छेदकत्वात्, अधिष्ठानतत्त्वज्ञानत्वेन निवर्तकत्वे वाच्ये प्रकृते चाधिष्ठानतत्त्वज्ञानस्यानादित्वेनाध्यास एव न स्यात्. ननु तत्त्वसाक्षात्कारमात्रं न निवर्तकम्, तीरस्थवृक्षादावूर्ध्वाग्रत्वसाक्षात्कारे विद्यमानेऽपि जले अ-
१६५ धोऽग्रत्वभ्रमात्, तथाचारोप्याविषयकाधिष्ठानतत्त्वसाक्षात्कारत्वमेव निवर्तकतावच्छेदकमिति चेन्न; तत्रोर्ध्वाग्रत्वतत्त्वज्ञानानिवर्त्यत्वादधोऽग्रत्वभ्रमस्योपाधिनिवृत्त्यैव तन्निवृत्तेः; अन्यथा पूर्वमूर्ध्वाग्रत्वमात्रसाक्षात्कारसम्भवेन तदनन्तरमधोऽग्रत्वभ्रमाभावप्रसङ्गात्, विशेषादर्शनजभ्रमस्यैव तत्त्वज्ञाननिव-
१७० र्त्यत्वात्. किञ्चारोप्याविषयकाधिष्ठानसाक्षात्कारत्वमात्रम् निवर्तकतावच्छेदकम्, उतारोप्याविषयकाधिष्ठानतत्त्वसाक्षा-

त्कारत्वम्, नाद्यः, इदमिति धर्मिज्ञानानन्तरम् रजत-
*भ्रमानुदयप्रसङ्गात्, द्वितीये किमधिष्ठानतत्त्वनाम, किम-*
धिष्ठानस्वरूपमेव उत आरोप्यविरोध्याकारः, नाद्यः, उक्त-
१७५ दोषादेव, न द्वितीयः, निर्धर्मके ब्रह्मणि विरोध्याकारा-
भावात्. ननु स्वरूपमेव ब्रह्मणि विरोध्याकार इति चेत्;
किं विरोधित्वम् वैयधिकरण्यम्, तदभावरूपत्वं वा; नाद्यः
ब्रह्मणो निरधिकरणत्वेनाविरोधितापत्तेः; न द्वितीयः,
शुक्तित्वादेरविरोधितापत्तेः. ननु तत्राप्यधिष्ठानस्वरूपारो-
१८० प्याभाव एव विरोधीति चेत्, तर्हीदन्त्वेनाधिष्ठानज्ञाने सति
अध्यासाभावप्रसङ्गात्. किञ्च स्वमात्रसाचित्वं स्वेतरासाचित्वे
सति स्वसाचित्वम्, तथा चेतरेषामभासमानतया प्रपञ्च एव
न स्यात्, प्रतिभाससमानसत्ताकत्वान्मिथ्यापदार्थस्य. ननु
युगपदेव सर्वमुक्तेस्तद्दशायाम् प्रपञ्चाभाव इष्ट इति चेन्न;
१८५ इतराविषयत्वस्यापि मिथ्यात्वेन तज्ज्ञानावश्यिकतया इतरा-
विषयत्वस्यैव व्याघातात्, इतराविषयत्वोत्पत्तिकाल एवा-
विद्यादेर्निवृत्ततया विचारसाध्यज्ञानस्य वैयर्थ्यप्रसङ्गाच्च.
वेद्यत्वपक्षे दूषणान्तरमाह **अतिरिक्तेति**, अत्रातिरिक्तपदं
ज्ञातातिरिक्तपरम्, ब्रह्मणस्ततोऽपरोक्षतया प्रत्यक्षस्य च
१९० तत्समानाकारत्वस्य च साध्यत्वायोगादिति भावः. **स एवेति**
स्वरूपधर्मविकल्प एवेत्यर्थः. स्वरूपपक्षे, किं कालविशेषे
ज्ञानाभावेन ज्ञातातिरिक्तता, उतांशभेदेनेति विकल्पम-
भिप्रेत्य प्रथमपक्षे दूषणमाह **नित्येति**. द्वितीये दूषणमाह

**निरंश** इति. धर्मपक्षे दोषमाह **निर्विशेष** इति मिथ्या-
१९५ भूतविशेषपक्षस्तु "फलस्य तथात्वे भ्रान्तित्वापातादि"त्यनेन
निरस्त इति भावः. एवमियता ग्रन्थेनानुदितानस्तमितस्व-
रूपैकप्रकाशमित्यनेन सूचितव्याघातो दर्शितः. अथ स्वमा-
त्रसाक्षित्वस्य वैशद्यस्य वा साध्यत्वेऽपि जिज्ञासा नोपपद्यत
इत्युपपादयन्नशेषविशेषशून्यमित्यनेन सूचितं व्याघातन्दर्श-
२०० यति **कथञ्चे**त्यादिना, जिज्ञासाहीदं किमित्याकारा
वा कथमित्याकारा वा भवति, एतदाकारप्रश्नयोग्यविष-
याभवतीत्यर्थः. **सर्वञ्चे**ति प्रश्नद्वयविषयेऽपीत्यर्थः. विदि-
ताविदिताकारभेदाभावेऽपि इदं किमित्यादिप्रश्नोऽस्त्वि-
त्यत्राह **कृत्स्नेति,** कृत्स्नावगतौ ज्ञातव्यांशाभावेन नैष्फ-
२०५ ल्यात्प्रश्नो नोपपद्यते, कृत्स्नानवगतौ हेत्वभावेन धर्मिनिर्दे-
शोऽनुपपन्नः. **तद्यो**गादिति इदं किमित्यादिप्रश्नस्यायो-
गात्. एवं कृत्स्नावगत्यनवगत्योः नैष्फल्यनिर्हेतुकत्वप्रसङ्गेन
इदं किमित्यादिप्रश्नस्थले विदिताविदिताकारभेदे आव-
श्यके तादृशप्रश्नप्रयोजकजिज्ञासाया अपि तन्नैयत्यात् स्वमा-
२१० त्रसाक्षित्वं वैशद्यस्य वा साध्यत्वेऽपि न तन्मात्रेण जिज्ञा-
सोपपत्तिरिति स्थितम्. जिज्ञासासमर्थनार्थं मतत्रयमाह
नवीनः, सत्त्वविशिष्टज्ञानं हेतुः, अखण्डविषयज्ञानं फलम्,
तद्विषयेच्छा जिज्ञासेत्येकम्; प्रतिबद्धः प्रथमोत्पन्नोऽद्वैतसा-
क्षात्कार एव हेतुः, अप्रतिबद्धज्ञानं फलम्, तदिच्छा
२१५ जिज्ञासेत्यपरम्. प्राथमिकज्ञानमनवधारणत्वात् अविद्यया

अनिवर्तकत्वादेव च हेतुः, अवधारणरूपस्वरूपसाक्षात्कारः फलं, तदिच्छैव जिज्ञासेति यापरम्; तत्राद्यमुत्तरत्र निरसिष्यते, इतरन्मतद्वयमनेन निरस्यते, तथा हि वेदान्तवाक्याद्वैतसाक्षात्कार एव प्रथममुत्पद्यते, नत्वापातरूपम्, आ-
२२० पातत्वं च प्रतिबद्धफलत्वम्, प्रतिबन्धश्चानादिप्रवृत्तदृढतरभेदवासनाभ्य एव, तास्तु श्रवणमननादिभिः क्षीयन्ते, ततो वाक्यादुत्पन्नात्मसाक्षात्कारादविद्या निवर्तते, अतोऽप्रतिबद्धापरोक्षज्ञानेच्छा संभवति, सैव जिज्ञासेति यन्मतम् तत्तावदनुपपन्नम्; विदिताविदिताकारभेदाभावात् प्रश्नानु-
२२५ पपत्तेस्तत्प्रयोजकजिज्ञासानुपपत्तेः, ब्रह्मजिज्ञासायाः प्रश्नप्रयोजकत्वस्य "अधीहिभगवो ब्रह्म, किं भगवन्तः परमं वदन्ति, सोऽहमन्त्रविदेवास्मिनात्मवित्तमानं भगवोविजिज्ञासे" इत्यादिभिरवगम्यते. ननु अद्वैतस्य प्रथमतो दर्शनेऽपि द्वैतवाक्यदर्शनात्सन्देहे सति जिज्ञासोपपद्यत इति चेन्न;
२३० द्वैतवाक्यदर्शनेऽपि धर्मिनिश्चयस्य निष्प्रत्यूहत्वात् अद्वैतानन्दत्वादेस्तु तदभिन्नत्वात् सन्देहो नोपपद्यते, न चाद्वैतादेर्निश्चयेऽप्यद्वैतत्वादिप्रकारकनिश्चयाभावात् सन्देहोपपत्तिः, तस्य विचारानन्तरमप्यभावेन. सन्देहानिवृत्तिप्रसङ्गात्, निष्प्रकारकज्ञानस्यैव विचारजन्यत्वाङ्गीकारात्. नचाप्रतिबद्धेन वि-
२३५ चारानन्तरभाविज्ञानेनाज्ञाननिवृत्तेरेव संशयनिवृत्तिरिति वाच्यम्, संशयविरोधिज्ञानस्यैवाज्ञाननिवर्तकत्वात्, संशयनिवृत्त्यनुकूलस्वरूपविशेषवत एव त्वया निश्चयत्वोक्तेः. न च

निश्चये सत्यपि प्राथमिकज्ञानेन प्रतिबन्धादज्ञानानिवृत्तेः संशयसम्भव इति वाच्यम्; अज्ञानानिवृत्तावपि श्वैत्या-
२४० नुमित्याशङ्खपीतलभ्रमदशायां श्वैत्यसंशयनिवृत्तिदर्शनात्. विपरीतभ्रमरूपनिश्चयेनापि संशयनिवृत्तिदर्शनाच्च. न चा-
द्वैतं स्वरूपाद्भिन्नमेवेति तत्कोटिकसंशयोपपत्तिः, तस्य द्वैतकोट्यन्तर्भावेन कोट्यन्तरत्वानुपपत्तेः, किञ्च सत्यत्वे अद्वै-
तहानिः, मिथ्यात्वे प्रतियोगिसमानसत्ताकस्य प्रतियोगिकाले
२४५ प्रतियोग्याश्रये ब्रह्मण्यसम्भवः. किञ्च ब्रह्मणि जगत्कारण-
त्वादिद्वैतनिश्चयादेव न द्वैतकोटिकसन्देहः. न च पार-
मार्थिकद्वितीयवत्त्वादिना सन्देहः, कोट्यप्रसिद्धेः, प्रपञ्चे
सत्यत्वमिथ्यात्वकोटिकसन्देहेऽपि न ब्रह्मजिज्ञासाया इदं
किमित्यादिप्रश्नस्य च ब्रह्मण्युपपत्तिः, (तस्य) ब्रह्मविषयक-
२५० सन्देहाभावात्; तदेतत्सर्वमभिप्रेत्योक्तम् कथञ्च जिज्ञासे-
त्यादि. किञ्च प्राथमिकाद्वैतसाक्षात्कारादेवाविद्यानिवृत्तौ
कुतस्सन्देहः. ननु भेदवासनयाप्रतिबन्धान्न प्राथमिकसा-
क्षात्कारादविद्यानिवृत्तिरिति चेन्न; ज्ञानस्याज्ञाननिवर्तकत्वे
हि ज्ञानेनाज्ञानं निवृत्तमित्यनुभवो मानम्, ततश्च वेदा-
२५५ न्तवाक्यात् ब्रह्मज्ञाने जाते ब्रह्मज्ञानेन ब्रह्माज्ञानं निवृत्त-
मित्यनुभवस्य दुरपह्नवत्वेन प्राथमिकब्रह्मज्ञानस्य प्रतिबन्धा-
सम्भवात्. प्राथमिकब्रह्मज्ञानमात्रात्संसारनिवृत्तेरदर्शनेन
तदनुवृत्तये तदुपादानाज्ञानानुवृत्तिराश्रयणीयेति चेत्,
त्यज तर्हि संसारस्याज्ञानोपादानत्वम्. यच्च तत्त्वज्ञानस्य

२६० प्रतिबन्धात् अज्ञानानिवर्तकत्वे निदर्शनं "विशेषदर्शनम् प्रति-
बन्धान्न प्रतिबिम्बभ्रमम् निवर्तयती"ति तन्न, तत्र विशेषद-
र्शनस्य तन्निवर्तनायोग्यत्वात्. ननु विशेषदर्शनविषयविरुद्ध-
विषयभ्रमत्वमेव निवर्त्यतावच्छेदकम्, विशेषादर्शनजन्यभ्रम-
त्वापेक्षया लघुत्वात्, विरोधस्य नियमघटितत्वेऽपि जन्यत्व-
२६५ स्यानन्यथासि(द्धादि)द्धत्वादिघटितत्वेन ततोऽपि गुरुत्वादिति
चेन्न ; चन्द्रप्रादेशिकत्वदूरस्थपर्वताल्पपरिमाणादिभ्रमे व्यभि-
चारात् ; तद्भ्रमस्य सोपाधिकत्वाभावेनोपाधिरूपप्रतिबन्ध-
काभावात्. नन्ववच्छेदकलाघवानुसारेण तत्रापि दूर-
(स्थ)त्वादेः प्रतिबन्धकत्वं कल्प्यत इति चेत्तन्न; विशेषदर्शन-
२७० मन्तरेणोपाधिनिवृत्त्या व्यासङ्गादिना वानिवृत्तिस्थले व्यभि-
चारेण तस्य तदवच्छेदेन निवर्तकत्वाभावात्. न चोपाधि-
निवृत्त्याद्यनिवर्त्यत्वेन विशेषणान्न व्यभिचार इति वाच्यम्,
उपाधिनिवृत्त्याद्यनिवर्त्यसोपाधिकभ्रमस्यासत्त्वेन तदर्थं प्रति-
बन्धककल्पनावैयर्थ्यात्. किञ्चोपाधिनिवृत्तीत्यादिना उपा-
२७५ धिनिवृत्त्यनिवर्त्यत्वव्यासङ्गानिवर्त्यत्वादिकं हि विवक्षितम्,
तत्र चोपाधिनिवृत्त्यनिवर्त्यत्वस्थाने विशेषादर्शनजन्यत्वमेव
निवेश्यतां लाघवात्, उपाधिनिवृत्त्यनिवर्त्यत्वस्य उपाधि-
निवृत्तिजन्यनिवृत्तिप्रतियोगित्वाभावात्मकतया निवृत्ति-
प्रतियोगित्वाभाव(नि)प्रवेशेन गौरवात्. किञ्चैवं विशेषदर्श-
२८० नविषयविरुद्धविषयभ्रमत्वमिति विशेष्यभागेऽपि न वक्तव्य
इति लाघवम्. ननु च पक्षद्वयेऽपि व्यासङ्गादितत्तदनेका-

निवर्त्त्यत्वविशेषणे गौरवात्' विशेषदर्शनासमवहितसामग्र्य-
निवर्त्त्यत्वमेव विशेषणम्, ततश्च पूर्वोक्तलाघवं स्थितमेव. न
चैवमपि प्रतिबन्धकल्पनावैयर्थ्यम् सोपाधिकभ्रमस्योपाधिनि-
२८५ वृत्तिनिवर्त्त्यत्वादिति वाच्यम्; यत्र विशेषदर्शनसमकालो-
त्पत्तिकोपाधिनिवृत्त्या भ्रमनिवृत्तिः, तत्र विशेषदर्शनासम-
वहितसामग्र्यनिवर्त्त्यभ्रमत्वस्य सत्त्वेनोपाधिकालीनविशेषदर्श-
नादनिवृत्त्यर्थं प्रतिबन्धकल्पनात्. न च विशेषदर्शनस्य
विद्यमानस्यापि भ्रमनिवर्तकत्वे विप्रतिपत्तेस्तदसमवहित-
२९० सामग्र्यनिवर्त्त्यत्वानिश्चयान्नप्रतिबन्धकल्पनेति वाच्यम्; वि-
शेषदर्शनासमवहितत्वेन विशेषदर्शनासमान(समवहित)का-
लीनत्वस्य विवक्षितत्वादिति चेन्न; विशेषदर्शनकालीनवि-
शेषादर्शनजभ्रमत्वस्यैव विशेषदर्शनासमवहितसामग्र्यनिवर्त्य-
विशेषदर्शनविषयविरुद्धविषयभ्रमत्वापेक्षया लघुत्वेनावच्छेद-
२९५ कत्वात्. ननु तर्हि विशेषदर्शनकालीनविशेषदर्शनविषयवि-
रुद्धविषयभ्रमत्वमेवावच्छेदकमस्तु लाघवादिति चेन्न; विशे-
षदर्शनोत्तरकालोत्पन्नसोपाधिकभ्रमस्य विशेषदर्शनं विनापि
उपाधिनिवृत्त्यैव निवृत्तिदर्शनेन व्यभिचारेण तस्यानवच्छेद-
कत्वात्, तदर्थमुपाधिनिवृत्त्यनिवर्त्त्यत्वेन वा विशेषदर्शना-
३०० समानकालीनसामग्र्यनिवर्त्त्यत्वेन वा विशेषणे गौरवात्
किञ्च विशेषदर्शनविषयविरुद्धविषयभ्रमत्वस्यावच्छेदकत्वे सं-
योगाद्यवच्छेदकमूलाद्यवच्छेदेन संयोगाभावभ्रमस्य तदवच्छे-
देन संयोगवत्त्वव्याप्यदर्शनानिवर्त्यत्वापत्तेः, विशेषदर्शनविषय-

मूलादिगतधर्मविरोधित्वाभावात् भ्रमविषयसंयोगाभावस्य.
२०५ आमघटे रक्तभ्रमस्य च रक्तत्वाभावनिरूपितकालिकव्याप्ति-
मादाय यदामत्वादिविशेषदर्शनं तेनानिवर्त्यत्वापत्तिः, विशे-
षदर्शनविषयामत्वादिविरोधित्वाभावाद् भ्रमविषयरक्तत्वस्य,
पाकानन्तरं तत्रैव रक्तत्वोत्पत्तेः; विशेषादर्शनजन्यत्वन्तु तत्रा-
प्यस्तीति नास्मन्मते दोषः. न च विशेषदर्शनविषयेण सहै-
२१० कस्मिन् काले एकावच्छेदेन सहानवस्थायिविषयकभ्रमत्वमे-
वावच्छेदकमिति दोषद्वयनिस्तारः; एतद्वृक्षत्वादेर्मूलाव-
च्छेदेन संयोगव्याप्यत्वग्रहेत(त्त)द्दर्शनस्य मूलावच्छेदेन संयो-
गाभावभ्रमविरोधित्वात्, तत्र चैकावच्छेदेन सहानवस्थायि-
त्वस्याप्यभावात्; घटत्वस्य च दशाविशेषे रक्तत्वाभावव्याप्यत्व-
२१५ ग्रहे तद्दर्शनस्य तद्दशायाम् रक्तत्वभ्रमविरोधित्वात्, तत्र
चैककाले सहानवस्थायित्वस्याप्यभावात्. किञ्च लभ्यते
स्फटिकत्वादिविशेषदर्शनेन लौहित्यभ्रमस्य प्रतिबिम्बस्येव
इव निवर्त्यत्वं वाच्यम्, तत्र च परम्परासंबन्धेन लौहित्यस्य
स्फटिके सत्त्वात् विरोधाभावान्न निवर्तकता स्यात्; ननूपा-
२२० धिनिवृत्त्याद्यनिवर्त्यत्वादिना न विशेष्यते, किन्तु विशेषदर्श-
नाव्यवहितपूर्वक्षणवर्तित्वेन, अतो न गौरवम्. यदप्युक्तं
विशेषदर्शनविषयविरुद्धविषयभ्रमत्वस्यावच्छेदकत्व इत्यादि
तदपि न, विशेषदर्शनविषयपदेन व्याप्यत्वेन प्रमाणव्या-
पकस्य विवक्षितत्वात्, एतद्वृक्षत्वस्य संयोगविशेषो व्यापकः.
२२५ यदपि किञ्च लभ्यते इत्यादि, तदपि न; भ्रमविषयसंबन्धेन

विरोधित्वस्य विवक्षितत्वात्, भ्रमविषयसाक्षात्संबन्धेन लौहित्यस्यापि स्फटिकत्वादिविरुद्धत्वादिति चेत्, उच्यते; यत्र सोपाधिकभ्रमद्वितीयक्षणोत्पन्नोपाधिनिवृत्तिमात्रेण तृतीयक्षणे भ्रमनिवृत्तिः, तत्क्षण एव विशेषदर्शनस्योत्प-
२३० द्यते, तद्भ्रमे उक्त निवर्त्यतावच्छेदकस्य सत्त्वेन व्यभिचारात् तदर्थं विशेषदर्शनाव्यवहितपूर्वक्षणोत्पत्तिकत्वं वक्तव्यम्; उत्पत्तिश्च स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयसंबन्धः, अव्यवहितत्वञ्च विशेषदर्शनाधिकरणक्षणानन्तरितत्वम्, पूर्वक्षणश्च प्रागभावावच्छिन्नक्षणः, व्यापकत्वञ्च
२३५ प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नस्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्, तथा च विशेषदर्शनक्षणाव्यवहितपूर्वक्षणोत्पत्तिकत्वे सति विशेष(दर्शनविषय) व्यापकेन सहैकस्मिन्काल एकावच्छेदेन भ्रमविषयसंबन्धेन सहानवस्थायिविषयकभ्रमत्वापेक्षया विशेषदर्शनकालीनविशेषादर्शन-
२४० जन्यभ्रमत्वस्यैव लघुत्वेनावच्छेदकत्वात्. किञ्च विशेषदर्शनं विनाप्युपाधिनिवृत्त्या निवृत्तिदर्शनेन सोपाधिकभ्रमत्वावच्छेदेनोपाधिनिवृत्तेर्निवर्तकत्वकल्पनात् तदभावादेव भ्रमानिवृत्त्युपपत्तौ न तत्र प्रतिबन्धककल्पना. न च व्यासङ्गादिनापि सोपाधिकभ्रमनिवृत्तेर्व्यभिचारः, व्यासङ्गाद्यजन-
२४५ न्यत्वेन विशेषणात्. किञ्च विशेषदर्शनस्य प्रतिबिम्बभ्रमनिवर्तकत्वे श्वैत्यानुमितेरपि शङ्खपीतत्वभ्रमनिवर्तकत्वापत्तिः. न च, ततस्तन्निवृत्त्यदर्शनादेवानिवर्तकत्वं, लाघवाद्विशे-

षद्दर्शनविषयविरुद्धविषयभ्रमत्वेन निवर्त्त्यत्वकल्पनात्, तद-
नुसारेण प्रतिबिम्बस्थल इवात्रापि विशेषसाक्षात्कारत्वापेक्ष-
२५० या विशेषज्ञानत्वेन निवर्तकत्वकल्पने लाघवात्, तदनुसारेण
प्रतिबन्धककल्पनोपपत्तेः. न चेष्टापत्तिः, प्रपञ्चभ्रमनिवृत्त्यर्थं
शाब्दापरोक्षाङ्गीकारविरोधात्. न चापरोक्षे ब्रह्मणि परो-
क्षज्ञानासंभवाच्छाब्दज्ञानस्यापरोक्षत्वाङ्गीकारः, अपरोक्षेऽपि
वह्नौ सिषाधयिषयानुमिति दर्शनात्. विस्तरस्तु शब्दजन्या-
२५५ परोक्षभङ्गे द्रष्टव्यः. तस्माद्विशेषदर्शनकालीनविशेषादर्शनज-
न्यभ्रमत्वमेवावच्छेदकम्. ननु मूलावच्छेदेन संयोगभ्रमे
अग्रावच्छेदेन तदभावव्याप्यदर्शने तद्भ्रमनिवृत्त्यापत्तिरिति
चेन्न, स्वाभावजन्यभ्रमं प्रति विशेषदर्शनस्य निवर्तकत्वात्. न
च विशेषादर्शनस्य हेतुत्वे मानाभावः विशेषादर्शनहेतुदोषा-
२६० णामेव भ्रमहेतुत्वादिति वाच्यम्; विशेषदर्शनस्य प्रतिबन्ध-
कत्वेन तदभावस्य कारणत्वावश्यम्भावात्; प्रतिबन्धकाभावस्य
कारणत्वाभावमते च विशेषादर्शनप्रयोज्यत्वम् विवक्षितम्.
यत्तूक्तं विशेषादर्शनं न कारणं, स्ववृत्तिविशेषदर्शनस्यासार्व-
त्रिकत्वेन तदभावस्यापि सर्वत्रभ्रमस्थलेऽसम्भवात्, परकीय-
२६५ विशेषदर्शनाभावस्यातिप्रसक्तत्वादिति, तन्न, सिषाधयिषावि-
रहावच्छिन्नसिद्ध्यभावस्यानुमिताविवाप्रामाण्यशङ्काशून्यविशे-
षदर्शनत्वावच्छिन्नसामान्याभावस्यैव हेतुत्वात्, अप्रामाण्य-
शङ्काक्रान्तविशेषदर्शने सत्यपि भ्रमानिवृत्तेः. अथ वा विशे-
षदर्शनप्रतिबन्धकदोषजन्यत्वमेवावच्छेदकमस्तु. ननु प्रति-

२७० बन्धकत्वस्य कारणीभूताभावप्रतियोगित्वात्मकतया कारणत्वस्य चानन्यथासिद्ध्यादिघटितत्वेन गौरवम्, विशेषदर्शनविषयेत्यादिमदुक्तावच्छेदकन्तुलघ्विति चेन्न; प्रकृते कारणत्वस्य नियतपूर्ववर्तित्वस्य विवक्षितत्वात्, कार्यानुत्पादव्याप्यत्वं वा प्रतिबन्धकत्वमत्र विवक्षितम्, तथा च उपाधिनिवृत्त्याद्य-
२७५ निवर्त्त्यत्वादिविशिष्टत्वदुक्तावच्छेदकापेक्षया लाघवादिदमेवावच्छेदकमस्तु. वस्तुतस्तु पूर्वभ्रमोविशेषदर्शनेन विरोधिगुणतया निवृत्त इति न तत्र प्रतिबन्धः, अतो विशेषदर्शनस्योत्तरज्ञानप्रतिबन्धकत्वमुपाधेश्चोत्तेजकत्वमिति पर्यवसितम्, तथा च नेदं प्रकृतार्थनिदर्शनम्. यदप्युक्तं परेषा-
२८० मप्यात्मनि शरीराभेदबुद्धिर्निरुपाधिकभ्रम एव, उपाध्यन्तराभावात्; तथा च यदि तत्त्वज्ञानं प्रतिबन्धान्न भ्रमन्निवर्तयतीति नोच्येत, तदा कथं परेषां शास्त्रारम्भस्स्यात्. न चेश्वरसाक्षात्काराभावात्तत्र भ्रमो न निवर्तते, न तु प्रतिबन्धादिति वाच्यम्; ईश्वरसाक्षात्कारस्य भिन्नविषयस्य
२८५ साक्षात्तदनिवर्तकत्वात्; जीवसाक्षात्कारस्त्विदानीमपि विद्यत एवं, ईश्वरसाक्षात्कारस्याभिन्नं विषयस्य साक्षादप्यलौकिकस्य इदानीमपि सत्त्वात्, लौकिकस्य पश्चादप्यभावात्; तस्मात्तत्त्वात्मज्ञानत्वेन चिरप्रतिबद्धं सन्न भ्रमन्निवर्तयतीति वक्तव्यमित्यस्मन्मतेऽपि तुल्यतेति. अत्र ब्रूमः, स्वात्मतत्त्व-
२९० साक्षात्कारो मिथ्याज्ञानप्रागभावासहवृत्तिमिथ्याज्ञाननिवृत्तिहेतुः, ईश्वरसाक्षात्कार आत्मतत्त्वसाक्षात्कारद्वारा

मिथ्याज्ञाननिवृत्त्युपयोगीत्येकमतम्; अदृष्टद्वारात्मतत्त्वसा-
क्षात्कारस्य सहकारीत्यपरम्; मतद्वयेऽपीदानीं विशेष-
दर्शनस्य सत्त्वेऽपि मिथ्याज्ञानप्रागभावासहवृत्तिमिथ्या-
३९५ ज्ञानध्वंसत्वावच्छेदेन देहादिभेदप्रकारकात्मतत्त्वसाक्षात्का-
रत्वावच्छिन्नस्य कारणत्वोपगमेन तादृशसाक्षात्कारस्य श्रव-
णादिसाध्यस्य ततः प्रागसिद्धेः साक्षात् परम्परया वा
मिथ्याज्ञाननिवृत्ति प्रयोजकीभूतस्येश्वरसाक्षात्कारस्याभा-
वाच्च तादृशमिथ्याज्ञानानिवृत्त्युपपत्तौ नात्र प्रतिबन्ध-
४०० कापेक्षा. न चेश्वरसाक्षात्कारोऽलौकिक इदानीमप्यस्ति,
लौकिकः पश्चादपि नास्तीति वाच्यम्; श्रवणादि पर्व-
क्रमोत्पन्नयोगजधर्मजन्यसाक्षात्कारस्य तद्धेतुत्वात्; इदा-
नीञ्च तदभावात्. किञ्च भेदवासनायाः कथमविद्या
निवृत्तिप्रतिबन्धकत्वं, मानाभावात्; प्रहरपर्यन्तं रज-
४०५ तवासनानुवृत्तावपि शुक्तिज्ञानेन शुक्त्यज्ञाननिवृत्तिदर्श-
नात्. कथं च श्रवणादीनाम् भेदवासनानिरासकत्वं, मा-
नाभावात्. रजतज्ञानानन्तरं बहुतरशुक्तिज्ञानसन्ताने
सत्यपि शुक्तिसंस्कारानुद्बोधदशायाम् तद्रजतमिति भ्रम-
रूपस्मृतिदर्शनेन ध्यानसन्तानस्य विपरीतसंस्कारनिवर्तक-
४१० त्वासिद्धेः. किञ्च किन्निदिध्यासनस्यादृष्टद्वारा भेदवासनानि
रासकत्वमुत साक्षात्य; नाद्यः, त्रिचतुरस्मृति सन्तानेनैव
तत्सिद्धौ बहुकालध्यानवैयर्थ्यं प्रसङ्गात्, अपसिद्धान्ताच्च.
न द्वितीयः, प्राथमिक स्मृतिव्यक्त्यैव तद्विपरीतवासनानि-

रामे उत्तरवैयर्थ्य प्रसङ्गात्. 'न चैकव्यक्तेरेकवासनानिवर्तक-
४१५ त्वमेवेति वाच्यम्; तथा सत्यनादिभ्रमवासनानामानन्त्येन
कदाप्यनिवृत्त्यापत्तेः. किञ्च प्रतिबन्धनिरासार्थत्वे किम्मानम्;
अप्रतिबद्धज्ञानोद्देशेन श्रवणादिविधानमिति चेन्न, द्रष्टव्यं
इति दर्शनमात्रस्यैवोद्देश्यत्वप्रतीतेः. किञ्चाप्रतिबद्धज्ञानार्थत्वं
श्रवणस्य न प्राप्तम्, नापि द्वैतवाक्यविचारादिसाधनान्तर-
४२० स्येति नियमविधिर्नस्यात्. किञ्चाप्रतिबद्धज्ञानं फलमित्यत्र
किं प्रतिबन्धकाभावविशिष्टम् फलत्वेन विवक्षितम्, उत
प्रतिबन्धकाभावकालीनत्वमवच्छेदकमिति; नाद्यः, सविशे-
षणे हीति विशेषणमात्रपर्यवसानात्; न द्वितीयः, प्रतिबन्ध-
काभावकालीनत्वस्य प्रतिबन्धकाभावसामग्री महिम्नैवोप-
४२५ पत्तौ सामग्र्यन्तरानपेक्षणात्, तथा च प्रतिबन्धकाभावोद्दे-
शेन विधाने श्रुतहानाश्रुतकल्पना प्रसङ्ग इति; यच्च तृती-
यमतम्, यद्यपि प्रथमं निर्विशेषब्रह्मसाक्षात्कारश्शब्दाभि-
-व्यक्तः, तथापि सोऽनवधारण एव, अग्रे संशयदर्शनात्,
नन्वेककोटिकज्ञानमात्रन्निश्चय एवेति न संशयस्स्यादिति
४३० चेन्न; न तावन्निश्चयत्वं जातिः, चाक्षुषत्वादिना साङ्कर्यात्;
त्वन्मते जातेरव्याप्यवृत्तित्वाभावेन धर्मिज्ञानांशे तदभाव-
प्रसङ्गाच्च, धर्मिज्ञानांशे तदभावप्रसङ्गादेव न संशयान्यज्ञा-
नत्वम्, अत एव न संशयत्वाभाववत्त्वम्, धर्मिज्ञानस्य संशया-
भिन्नत्वेन तदभावात्; नापि धर्म्यंशे तदभावः, ज्ञाने अंशा-
४३५ भावात्; न च धर्मिविषयित्वावच्छेदेन तदस्तिता, ज्ञानस्वरू-

पक्ष विषयत्वस्य ज्ञानमात्रतया विरुद्धधर्मद्वयासंभवात्; अन्यथा संशयेऽप्येकैककोट्यंशे परस्परविरुद्धोभयप्रकारकत्वल-क्षण संशयत्वाभावेन निश्चयत्वापत्तेः; न च स्व प्रकारीभव-द्धर्मविरुद्धप्रकारकज्ञानाभिन्नत्वं संशयत्वम्, तच्च तत्राप्यस्तीति
४४० वाच्यम्, संशयाभिन्नधर्म्यंशज्ञानेऽपि तत्सत्त्वात्; न च तद्विरुद्धप्रकारकज्ञानत्वे सतीति विशेषणान्नाति प्रसङ्ग इति वाच्यम्, समूहालम्बनव्यावृत्त्यर्थमेकविशेष्यकत्वस्या-प्यावश्यकत्वे एक विशेष्यकत्वे सति स्व प्रकारीभवद्धर्मवि-रुद्धप्रकारकज्ञानाभेदे सति तज्ज्ञानप्रकारविरुद्धप्रकार-
४४५ त्वापेक्षया लाघवेन स्वविषये स्वाकारतद्विरुद्धद्वयवैशि-ष्ट्यावगाहिज्ञानाविरोधिज्ञानत्वस्यैव संशयशब्दार्थत्वात्. ननु स्वप्रकारकोटिकसंशयान्यत्वं निश्चयत्वम्, तच्च कोट्यंशे नास्ति, धर्म्यंशेत्वस्तीति स निश्चय इति; तन्न, परमते इदन्त्वस्य केवलान्वयितया तत्प्रकारकसंशयाप्रसिद्धेः. तस्माद्यज्ज्ञानं
४५० यत्संशयनिवृत्त्यनुकूलस्वरूपविशेषवत्, तत्तन्निश्चयः, इतरत्तु न तथेत्येककोटिकमपि किञ्चित्पुरुषदोषादनवधारणम्; किञ्चित्तु तर्कादिकारणमहिम्नातदनतिरिक्तविषयमपि निश्चय इत्यनवद्यम्. नन्वेवमपि न निर्विशेषब्रह्मजिज्ञा-साभवितुमर्हति, संशयविरोधिज्ञानं ह्यीष्यते, तच्च संशय-
४५५ समानप्रकारकम्, निर्विकल्पकादिदमिति ज्ञानाच्च संशया-निवृत्तेः; निर्विशेषब्रह्मणि तदभावात्; न च कल्पित प्रकारोऽस्तीति वाच्यम्; तस्यावेदकश्रुतिजन्यज्ञानस्य तद्-

विषयत्वादिति चेन्नैवम्, ज्ञानं हि समानविषयतयावधा-
रणात्मकं संशयं निवर्तयति, न तु समानप्रकारकतया,
४६० अन्यविषयात्तदर्शनात् समानविषयत्वमप्यपे(क्षित)क्षणीय-
मिति चेत्, संशयादपि प्रसङ्गः; निश्चयत्वमप्यपेक्षितमिति
चेत्, तर्हि समानविषयनिश्चयो निवर्तकः लाघवात्. नि-
र्विकल्पकन्तु नास्त्येव; अनवधारणत्वादपि न तन्निवर्तकम्.
इदमिति ज्ञानन्तु घटत्वादिवैशिष्ट्याविषयकत्वान्न तत्सं-
४६५ शयन्निवर्तयति; अन्यथा अयं घट इति ज्ञानात्तद्गोचरे
घटत्वे इदं घटत्वन्नवेति संशयो न निवर्तेत; तस्मिन् घट-
त्वव्यतिरिक्तप्रकाराभावात्; अनभ्यासदशायाम् जले संश-
योऽपि न स्यात्; किञ्चैवमप्रमेयवानिति ज्ञानात्त्वदभि-
मत निश्चयात् घटत्वप्रकारकसंशयनिवृत्त्यापत्तिः, तत्र सा-
४७० मान्यधर्मप्रकारकत्वम् प्रतिबन्धकञ्चेदिदमिति ज्ञानेऽपि
तथा भविष्यतीति. तदप्यनेन निरस्तं, विदिताविदिताका-
रभेदाभावात्, न हि केनचिदाकारेण धर्मिनिश्चयाभावे
अविदिताकारज्ञानस्येष्यमाणत्वाभावे च इदं किमित्यादि
प्रश्नहेतु जिज्ञासासम्भवः. न च ब्रह्म केनचिदाकारेण
४७५ निश्चितम्. किञ्च नित्यानित्यवस्तु विवेकं साधयन्न्यायोप-
बृंहितवाक्येनैव नित्यानन्दवस्त्ववधारणमवोचः, आमनु-
ष्यादा ब्रह्मलोकं कर्म कार्यम्, "कर्मणा पितृलोको विद्यया
देवलोक" इति श्रुतेः, विद्याचा(चो)त्मोपासना, सा च
विहिततया कर्तृपरतन्त्रा क्रियैव, कार्यं सर्वमनित्यमेव,

४८० घटादिवत्, "तद्यथेह कर्मचितो लोकः क्षीयते, एव मेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेश्च; आत्मा च नित्योमोक्षवादिभिस्सर्वैरभ्युपेयः, स च परमप्रेमास्पदत्वात् "एषोऽस्य परम आनन्द" इति श्रुतेश्चानन्द इति, तेन हि श्रवणादेः प्रागुत्पन्नज्ञानस्यानवधारणत्व कथनं

४८५ विरुध्यते. अथ नित्यानन्दाद्यंशावधारणत्वाङ्गीकारेऽपि तेनाभेदाद्वैतांशानवधारणं न विरुध्यत इति चेत्, हन्त किं ब्रह्मणस्सावयवत्वमवयवसङ्घातात्मकत्वं स(ध)र्मकत्वं वाङ्गीकरोषि; येनैवं ब्रूयाः. अपि च नित्यानन्दात्मकत्वं किञ्जीवस्य उत ब्रह्मणः; नाद्यः, तदभेदस्यासाध्यत्वात्

४९० अपुरुषार्थत्वात्तद्दर्शनेनेतरवैराग्यासिद्धि प्रसङ्गात्, "ब्रह्मवेद ब्रह्मैव भवती"ति ब्रह्माभेदस्यैव पुरुषार्थत्व श्रुतेश्च, द्वितीये जीव ब्रह्मणोरभेदज्ञानेन भवितव्यमेव, तच्चाभेदज्ञानमज्ञत्वसर्वज्ञत्वादि भेदज्ञाने जाग्रति नोपपद्यत इति तन्मिथ्यात्वज्ञानमपि तदानीमावश्यकमेव. ननु विद्यत एवाभेदज्ञानन्मिथ्यात्वज्ञानञ्च, तदनवधारणरूपमित्युक्तमिति चेन्न, ततो

४९५ मुमुक्षानुपपत्तेः. अनवधारणादपि मुमुक्षाभवत्येवेति चेत्, तर्हि नित्यत्वानन्दत्वादिज्ञानमप्यनवधारणमेवास्तु; तथेवेष्यत इति चेत्, तर्हि नित्यानित्यवस्तुविवेकस्य न्यायसाधियोक्तिविरोधः; न च न्यायसाध्यस्यापि ज्ञानस्य संशयनिवर्तकस्यानवधारणत्वं वक्तुं शक्यम्. किञ्च यथानन्द-

५०० त्वादौ न्यायावतारः, तथा अभेदमिथ्यात्वयोरपि श्रवणात्

प्रागेव त्वत्कुमतिकल्पितदुर्न्यायावतारस्सुलभ इति तद-
वधारणञ्च स्यादेव. किञ्चास्मिन् पक्षे मननानन्तरभावि-
ज्ञानस्यैव संशयविरोधितयावधारणत्वात्तत एवाविद्यानिवृ-
५०५ त्तौ किञ्चिदिध्यासनेन; अवधारणस्योत्पन्नत्वेन तत्प्रति-
बन्धककल्मषनिवर्तकत्वेनोपयोगस्य वक्तुमशक्यत्वात्; कल्म-
षनिवृत्तेर्ज्ञानात्पूर्वमेव भावात्, नचात्रापि पक्षे जातेऽप्य-
वधारणेऽविद्यानिवृत्त्यनुत्पत्तेस्तत्प्रतिबन्धकभेदवासनानिरास-
कत्वेनोपयोगो वक्तुं शक्यः; तथात्वे प्राथमिकज्ञानस्याव-
५१० धारणत्वेऽपि मननानन्तरमिव प्रतिबन्धादज्ञानानिवृत्त्युपप-
त्त्यातदनवधारणत्वकल्पन वैयर्थ्यात्; न चानवधारणत्वकल्प-
नन्न प्राथमिकज्ञानादविद्यानिवृत्त्यभावाय, किन्त्वनभ्यासद-
शायाञ्जलादिज्ञानस्थल इवोत्तरकालसंशयोपपत्तय इति
वाच्यम्, तत्र तथात्वेऽप्यनाहितसन्देहोपपत्तेरनवधारण-
५१५ त्वाकल्पनात्, वाक्यान्तरात्प्रमाणान्तराद्वाभेददर्शनस्य तदा-
धायकत्वात्; भेददर्शनाभावे च संशयस्यैवासिद्धेः, जलादि-
ज्ञानस्थलेऽप्याहितसन्देह इति वक्ष्यते. न चाहितसन्देहस्यै-
वापक्ववस्थांशक्यः, अप्रयोजकत्वसन्दिग्धोपाध्यादीनां संशया-
धायकत्वात्; निश्चये सत्यपि तस्य दोष जन्यत्वादिशङ्कयार्थ
५२० संशयस्यानुभवसिद्धत्वाच्च. किञ्चैककोटिकज्ञानस्य निश्चयत्वा-
दनवधारणत्वमनुपपन्नम्. अत्र यदुक्तं न तावन्निश्चयत्वं
जातिरित्यादिना संशयनिवृत्त्यनुकूलस्वरूपविशेषवत्त्वातिरि-
क्तस्य जात्यादिरूपस्य निश्चयत्वस्य स्वविषये स्वाकारतद्विद-

द्रव्यवैशिष्ट्यावगाहिज्ञानाविरोधिज्ञानत्वातिरिक्तस्य संश-
५२५ यत्वस्य च वक्तुमशक्यत्वात् प्राथमिकज्ञाने निश्चयत्वाभाव-
स्यानवधारणत्वात्मक संशयत्वस्य चोपपत्तिरिति तन्न, नि-
श्चयत्वस्य जातित्वे बाधकाभावात्. न च चाक्षुषत्वादिना
साङ्कर्यं, कत्वादिव्याप्यतारत्वादिवदुपपत्तेः. नन्वेवं निश्चय-
पदनानार्थं स्यात्, तारपदस्य तु न नानार्थता, सजातीय
५३० साक्षात्कारप्रतिबन्धकतावच्छेदकरूपत्वेनानुगतीकृतजातीनाम्
प्रवृत्तिनिमित्तत्वादिति चेन्न; इष्टत्वात्, अत्राप्येककोटिक-
त्वाद्यभिव्यङ्ग्यजातित्वादितादृशधर्मान्तरसम्भवाच्च. न च संश-
येधर्म्यंशे निश्चयत्वाभाव प्रसङ्गः, जातेरव्याप्यवृत्तित्वाभावा-
दिति वाच्यम्, निश्चयत्वस्य तत्र सत्त्वेऽप्यव्याप्यवृत्तित्वप्रसङ्गा-
५३५ भावात्, न हि संशयत्वसामानाधिकरण्यमात्राद्व्याप्यवृत्ति-
त्वम्, किन्तु स्वात्यन्ताभावसामानाधिकरण्यात्; ननु कोट्यंशे
संशयत्वात्तदंशे निश्चयत्वाभावात् स्वात्यन्ताभावसामाना-
धिकरण्यं स्यादिति चेन्न, संशयत्वनिश्चयत्वयोर्द्रव्यत्व'घटत्व-
वदेकवृत्तेरिष्टत्वात्, संयोगतदभावयोरिवावच्छेदकभेदेन
५४० वृत्त्यनङ्गीकारात्; यद्येवं धर्म्यंशे निश्चय इति व्यवहारो न
स्यात्, किञ्च संशयानन्तरं संशयो न स्यात्, पूर्वसंशयस्यैव
तन्निश्चयत्वादिति चेन्न; धर्मितावच्छेदकविषयत्वाभिव्यङ्ग्य
(निश्चयत्व)जातिमत्त्वेन तन्निश्चयत्वव्यवहारात्. ननु धर्मि-
तावच्छेदकविषयत्वं न निश्चयत्वाभिव्यञ्जकम्, एक कोटि-
५४५ कत्वं ह्यभिव्यञ्जकमुक्तम्, तच्चैकमात्र कोटिकत्वमेव, अन्यथा

एक शब्दवैयर्थ्यात्, तथा च संशये तदभावात् कथं तदभि-
व्यक्तिरिति चेन्न, एकमात्रकोटिकत्वं हि किञ्चित्प्रकारकत्वे
सति तद्विरुद्धाप्रकारकत्वं, तथाच संशयस्यापि धर्मितावच्छेदकप्रकारकत्वे सति तद्विरुद्धाप्रकारकत्वस्य सत्त्वात् निश्च-
५५० यत्वाभिव्यक्तिसम्भवत्येव. यद्वा धर्मितावच्छेदकैककोटिरेव
विषयतया सम्बन्धाभिव्यञ्जिका, इतरनैरपेक्ष्येणाभिव्यञ्जक-
त्वमेकशब्देन विवक्षितम्, ततश्च धर्मितावच्छेदककोट्यभि-
व्यञ्जत्वात्तन्निश्चयत्वव्यवहारः, संशयत्वं च स्वप्रकारविरुद्ध-
प्रकारकत्वाभिव्यञ्ज्यनिश्चयत्वव्याप्यजातिविशेषः, स च यत्प्र-
५५५ कारविरुद्धप्रकारकत्वाभिव्यञ्ज्यस्तत्संशय इति व्यवहारः.
यद्वा निश्चयत्वं धर्मितावच्छेदकावच्छिन्न धर्मि (तत्) सम्ब-
न्धितावच्छेदकम्, संशयत्वन्तु विरुद्धकोटिसम्बन्धितावच्छे-
दकं, तेन यत्सम्बन्धितावच्छेदकं निश्चयत्वं, तन्निश्चयत्वव्यव-
हारः, यत्सम्बन्धितावच्छेदकं संशयत्वम्, तत्संशयत्वव्यवहारः,
५६० तथाच न संशयानन्तरं संशयानुत्पत्तिप्रसङ्गोऽपि; तन्निश्च-
यस्यैव तत्संशयनिवर्तकत्वात्, संशयान्यत्वन्निश्चयत्वमित्यत्रापि
न किञ्चिद्बाधकम्; न च धर्म्यंशे निश्चयत्वाभावप्रसङ्गः, त्वयेव
वृत्त्यादावप्यौपाधिकभेदेन . तदुभयप्रतीतेरित्यादिनावच्छेद-
कभेदादवच्छिन्नभेदाङ्गीकारात्, तद्वदेव धर्मिविषयत्वाव-
५६५ च्छेदेन संशयान्यत्वोपपत्तेः. संशयत्वाभाववत्वं निश्चयत्वमि-
त्यत्रापि न दोषः, ज्ञानेंशाभावेनांशभेदेन वृत्त्यसम्भवेऽपि
धर्मिविषयत्वाद्यवच्छेदेन संशयत्वतदभावोपपत्तेः; न च

विषयत्वस्य ज्ञानमात्रतया विरुद्धधर्मद्वयासम्भवादवच्छेदा-
सम्भवः ; घटादेराकाशसम्बन्धमात्रेणाकाशावच्छेदकत्ववद्वि-
५७० षयस्यैव ज्ञानसम्बन्धिनो ज्ञानेऽवच्छेदकत्वोपपत्तेः धर्म्यंवच्छिन्न
एव संशयत्वात्यन्ताभावसम्भवात्. यद्येवमवच्छेदकभेदेन
वृत्तिरिष्यते, तर्हि विरुद्धोभयप्रकारकत्वलक्षणसंशयत्वाभाव
एकैककोट्यंशेऽपि स्यादिति चेन्न, स्वप्रकारीभवद्धर्मविरुद्ध-
प्रकारकज्ञानाभिन्नज्ञानस्यैव संशयत्वात्. न च समूहाल-
५७५ म्बनेऽतिव्याप्तिः, एकविशेष्यकत्वेन विशेषणात्. नन्वेवमपि
धर्म्यंशेऽतिव्याप्तिवारणाय तज्ज्ञानप्रकारविरुद्धप्रकारकत्व-
मपि वाच्यम्, तथाचैकविशेष्यकत्वे सति स्वप्रकारीभवद्धर्म-
विरुद्धप्रकारकज्ञानाभेदे सति तद्विरुद्धप्रकारकत्वापेक्षया
लाघवात् स्वविषये स्वाकारतद्विरुद्धद्वयवैशिष्ट्यावगा-
५८० हिज्ञानाविरोधिज्ञानत्वमेव संशयत्वमिति चेन्न, तदपेक्षया
एकविशेष्यकत्वे सति स्वप्रकारीभवद्धर्मविरुद्धप्रकारकज्ञा-
नाभिन्नत्वस्यैव लघुत्वात्, उभयत्र ज्ञानपर्यन्तन्तुल्यम्, अवि-
रोधित्वस्याप्रतिबन्धकत्वात्मकत्वे अनिवर्तकत्वात्मकत्वे च
तदपेक्षया भेदाभावमात्रं लघु भवत्येव. ननु तत्र धर्म्यंशेऽति
५८५ व्याप्तिवारणार्थं तद्विरुद्धप्रकारकत्वं विशेषणन्देयमित्युक्त-
मिति चेन्न, स्वशब्दो हि न ज्ञानपरः, किन्त्वभिन्नपरः, ततश्च
न धर्म्यंशेऽतिव्याप्तिः. किञ्च त्वयापि धर्म्यंशेऽतिव्याप्तिवार-
णार्थं विशेषणन्देयमेव, तस्य (स्वप्र)स्वाकारीभूतकिञ्चित्
कोटितद्विरुद्धकोट्यन्तरवैशिष्ट्यावगाहिज्ञानाविरोधित्वात्

५९० यदि च तत्र धर्मिज्ञानस्य संशयाभिन्नत्वादनतिप्रसङ्गं पश्यसि, कुतस्तर्हि तस्मिंल्लक्षणे तच्चक्षुर्निमीलयसि, न हि क्वचिल्लक्षणे मन्मतानुसारः कार्यः क्वचित्त्वन्मतानुसार इति क्वचिद्विधिमधीषे. यद्वा स्वाभिन्नज्ञानप्रकारविरुद्धप्रकारकत्वमेव लक्षणमस्त्विति न कश्चिद्दोषः. किञ्च स्वविषयेस्वा-

५९५ कारेत्यत्र स्वशब्दद्वयं ज्ञानपरं तदविरोधिपरं वा, पूर्वस्वपदमविरोधिपरमुत्तर स्वपदं ज्ञानपरमिति वा, नाद्यः, स्थाणुत्वादिसंशयाविरोधिन्ययं घट इति ज्ञानेऽतिव्याप्तेः, न च तस्यापि तादृशघटत्वादिसंशयविरोधित्वान्न तत्रातिव्याप्तिरिति वाच्यम्, अयं क्षणिको वा क्षणिकविशेषगुण-

६०० वान्वेति संशयेऽव्याप्तेः, न च स्वविषये स्वाकारतद्विरुद्धद्वयवैशिष्ट्यावगाहिज्ञानाविरोधित्वं यदंशे तदंशे संशयत्वमिति वाच्यम्; केवलान्वयिप्रमेयत्वादिप्रकारकज्ञानस्य प्रमेयत्वाद्यंशे संशयत्वापातात्, तत्कोटिकसंशयाभावादन्यकोटिकसंशयस्यात्यविरोधित्वात्, कथञ्चित्तत्कोटिकसंशयोपपादने

६०५ च स्वप्रकारकोटिकसंशयान्यत्वलक्षणस्याप्रसिद्ध्यादूषणानुपपत्तेः, यत्प्रकारकसंशयः कदापि नास्ति तादृशोत्पन्नविनष्टादिव्यक्तिविशेषनिष्ठधर्मविशेषप्रकारकनिश्चयेऽतिव्याप्तेः. अत एव न तृतीयः, नापि द्वितीयः, प्रमेयमिदञ्जलमित्यनवधारणात्मकत्वदभिमतसंशये प्रमेयांशेऽतिव्याप्तेः, व्यक्तिविशेष-

६१० निष्ठधर्मप्रकारकद्विकोटिकसंशयः कदापि नास्ति, तद्धर्मप्रकारकत्वदभिमतैककोटिकसंशयेऽव्याप्तेः; तस्यानवधारण-

त्वच्च त्वद्रीत्या उत्तरकालं प्रामाण्यसंशयादवगम्यते. किञ्च पर्वतोवह्निमानित्यत्र स्वविषये वह्नौ स्वप्रकारीभूतवह्नि-तद्विरुद्धवह्न्यभावप्रकारकज्ञानाविरोधित्वात्संशयत्वापत्तिः,
६१५ तदनन्तरं वह्निर्वह्निमान्नवेति संशयदर्शनात्. ननु तस्य पर्वते वह्निसंशयविरोधित्वात् स्वप्रकारविरुद्धप्रकारकज्ञान-विरोधित्वस्य सत्त्वान्न तदभाव इति चेत्तर्हि अयं क्षणिको वा क्षणिकविशेषगुणवान्वेति सन्देहेऽव्याप्तिः, तस्य विशेष-गुण(णे)क्षणिकत्वसंशयविरोधित्वात्, ननु यदंशे स्वाकारत-
६२० द्विरुद्धाकारद्वय वैशिष्ठ्यावगाहिज्ञानाविरोधित्वं, तदंशे संशयत्वं, तेन विशेषगुणांशे क्षणिकत्वसंशयविरोधित्वान्न संशयत्वम्, आत्मादिधर्मिणि च संशयत्वमिति चेत्, एव-न्तर्हि पर्वतो वह्निमानिति ज्ञानस्य वह्न्यंशे वह्नि संशय-त्वापत्तिः, तत्र वह्निप्रकारकसंशयाविरोधित्वात्. स्वाकार-
६२५ विशेष्ये तदाकारतद्विरुद्धद्वयवैशिष्ठ्यावगाहिज्ञानाविरोधि-त्वन्तदंशे संशयत्वमिति चेन्न, एवं सति निर्विशेषब्रह्मसा-क्षात्कारस्य निष्प्रकारकतया विशेष्याभावेन उक्तलक्षणस्य तत्रासम्भवात्. किञ्च द्वितीयपक्षे आकारः किं प्रकारो विवक्षितः, उत घटाकारवृत्तिरित्यादित्वद्रीति सिद्धज्ञाना-
६३० कारो वा; नाद्यः, ब्रह्मसाक्षात्कारे तदसिद्धेः, नान्त्यः, स्ववि-षये स्वाकारावगाहनस्याभावात्. वस्तुतस्तु वस्तुतो विरुद्ध-प्रकारकत्वविवक्षायामविरोधभानदशायां स्थाणुः पुरुषश्चेति निश्चयस्यापि संशयत्वापत्तेः भासमानविरोधाश्रयप्रकारकत्वे

विवक्षणीये असम्भव एव स्यात्, विरोधे भासमाने एकत्रधर्म-
६ ३ ५ द्वयवैशिष्ट्यावगाहिज्ञानायोगात्; अन्यथासंशयसामग्रीत एव
परस्परविरुद्धस्थाणुत्वपुरुषत्ववानिति प्रतीत्यापत्तेः. किञ्चा-
नुमित्युपनीतश्वैत्यविषयकस्य शङ्खपीतत्वज्ञानस्य श्वेतश्शङ्खः
पीतइत्याकारकस्य विरोधविषयकस्यापि संशयत्वप्रसङ्गात्.
तर्हि किं कुर्मः, किञ्चिद्विरुद्धविषयं किञ्चिच्चाविरुद्ध-
६ ४ ० विषयमनुभूयत इति चेत्, विरुद्धविषयत्वतद्योग्यत्वोपपाद-
कम् इक्षुक्षीरादिमाधुर्यवदनुभवसाक्षिकोविषयीकरणविशेष
एव वैलक्षण्यमित्यङ्गीकुरु, ततश्च विषयीकरणविशेषावेव
संशयत्वनिश्चयत्वे. किञ्च एक कोटिकज्ञाने संशयत्वानुभवः
कस्यापि नास्त्येव, प्रत्युतैककोटिकज्ञानानन्तरं द्विकोटिक-
६ ४ ५ संशयोत्पत्तिपर्यन्तम्मम निश्चयो जात इत्येव व्यवहरति,
द्विकोटिकसंशयोत्पत्त्यनन्तरम् एतावन्तं कालमेतन्निश्चय एव
मम स्थितः, इदानीं सन्देहो जात इति च, ततश्च प्रमाण-
बलसिद्धसंशयनिश्चयविभागानुरोधेन जातिरुपाधिस्स्वरूपं
वा लक्षणमेष्टव्यम्, न तु स्वाभिमतलक्षणानुसारेण लक्ष्य-
६ ५ ० निर्णयः, अतिप्रसङ्गादिति. यद्वा स्वप्रकारकोटिकसंशयान्यत्व-
मेव निश्चयलक्षणमस्तु, यदुक्तं परमते इदन्त्वस्य केवलान्व-
यितया तत्प्रकारकसंशयाप्रसिद्धेरिति, तन्न, इदन्त्वस्य तत्त-
द्व्यक्तिपर्यवसिततया नानात्वेन केवलान्वयित्वाभावात्, केव-
लान्वयित्वव्यवहारस्त्वेदंशब्दप्रयोगविषयत्वविषयः. ननु इदं
६ ५ ५ प्रमेयं स्थाणुः पुरुषो वेति संशयः प्रमेयत्वांशे निश्चयो न

स्यात्, तत्प्रकारकसंशयस्याप्रसिद्धेरिति चेन्न, अभावे प्रमेयत्वप्रतियोगिकत्वभ्रमदशायामिदम्प्रमेयत्ववत्प्रमेयत्वाभाववद्वेति संशयोपपत्तेः. अत्र केनचिदुक्तम् एवमभावे प्रमेयत्वप्रतियोगिकत्वप्रसिद्धावपि संशयकोटिभूताखण्डप्रमेयत्वाभावा-

६६० प्रसिद्धिरेवेति, तन्न, अखण्डप्रमेयत्वाभावस्यैव कोटित्वासिद्धेः, प्रमेयत्वप्रतियोगिकत्वभ्रमविषयस्य प्रसिद्धाभावस्यैव संशयकोटित्वात्, दृश्यते च शुक्तौ रजतत्वभ्रमानन्तरमिदं रजतमिह नास्तीति रजतत्वभ्रमविषयस्य पुरोवर्तिनस्तदभावाधिकरणे आरोपः, आरोप्य निषेध इत्यभ्युपगमात्. किञ्च

६६५ यस्य देवदत्तस्य रजतमेव नास्ति तदीयत्वस्य रजतेऽनाप्तवाक्यादवगमे यस्मिन् भूतले रजतन्देवदत्तीयपटस्यास्ति, तत्र देवदत्तीयं रजतमिह नास्ति, इदं भूतलन्देवदत्तीयरजतवद्वानवेति संशयविपर्ययदर्शनाच्च. अस्तु वा अखण्डप्रमेयत्वाभाव कोटिकसंशयः, स च समवायाद्यवच्छिन्नः प्रसिद्ध

६७० एव, तेन च प्रमेयत्वस्य विरोधभ्रमदशायां संशयस्संभवत्येव. प्रमेयत्वद्रव्यत्वयोर्विरोधभ्रमदशायां तदुभयकोटिकसंशयोऽपि सम्भवति, विरोधभ्रमदशायां ब्रह्मणि सविशेषत्वनिर्विशेषत्वसंशयवत्. नन्वेवमपि ज्ञानवानात्मा ज्ञानाभाववेत्यादिसंशये ज्ञानवानिति धर्म्यंशाव्याप्तिः (शेऽव्याप्तः),

६७५ स्वप्रकारीभूतस्य ज्ञानस्य तादात्म्येन संशयकोटित्वादिति चेन्न, येन सम्बन्धेन प्रकारत्वं तत्सम्बन्धघटितप्रकारताकतत्कोटिकसंशयान्यत्वस्य विवक्षितत्वात्. यदुक्तं यद्यत्संशय्यनिष्ट्यनु-

कूलस्वरूपविशेषवत्, तत्तन्निश्चय इति, तन्न; स्वरूपप्रका-
शस्याद्वैतानन्दाद्यनवधारणत्वाङ्गीकारात्, तस्य च नि-
६८० त्यत्वाच्चरमाद्वैतसाक्षात्कारेण तदनिवृत्तेश्चरमसाक्षात्कार-
स्यानिश्चयत्वापत्तेः; न च तदनिवर्तकत्वेऽप्यहमानन्दोनवे-
त्यादिद्विकोटिकसंशयनिवर्तकतया निश्चयत्वोपपत्तिः; तथा
सत्युत्तरसंशयस्यापि यत्किञ्चित्पूर्वसंशयनिवर्तकत्वेन निश्चय-
त्वप्रसङ्गात्; इदं जलमित्यनभ्यासदशोत्पन्नैककोटिकसंशया-
६८५ नन्तरमुत्पन्नस्य इदञ्जलन्नवेति संशयस्य एक कोटिकसंश-
यनिवर्तकत्वेन निश्चयत्वप्रसङ्गात्. किञ्च स्थाणुत्वनिश्चयस्य
स्थाणुत्वाभावसंशयनिवृत्त्यनुकूलस्वरूपविशेषवत्त्वेन तन्निश्चय-
त्वापत्तिः; पुरुषत्वव्याप्यकरादिदर्शनस्य पुरुषत्वसंशयनिवर्तक-
त्वेन तस्य पुरुषत्वनिश्चयत्वापत्तिः. किञ्च मुक्तिकालीनान-
६९० न्दावधारणरूपे ब्रह्मस्वरूपेऽव्याप्तिः, तस्य संशयविरोधित्वे
इदानीं संशयानुपपत्तेः,तदेव हि संसारेऽपि ब्रह्मस्वरूपं. प्रति-
बन्धादिदानीं संशयन्न निवर्तयतीति यदि, तदानवधारण-
त्वाङ्गीकारविरोधः, प्रतिबिम्बभ्रमस्थलीयतत्त्वसाक्षात्कारव-
द्विरोधिनोऽपि प्रतिबन्धादेवानिवर्तकत्वात्. किञ्च चरम-
६९५ साक्षात्कारस्य स्वरूपानन्दप्रकाशस्य च तद्धर्मिकसंशयविरो-
धित्वं तत्कोटिकसंशयविरोधित्वंवा नास्त्येव, स्वरूपमात्रगो-
चरत्वात्, न हि घटमात्रगोचरं ज्ञानं तद्धर्मिकस्य वा
तत्कोटिकस्य वा संशयस्य विरोधि भवति, दृश्यते च
प्रकृष्टप्रकाशश्चन्द्र इति चन्द्रस्वरूपेऽवधृतेऽपि तत्कोटिकोदे-

३०० प्रकाशविशेषादिधर्मिकः देशकालविशेषादिकोटिकस्तद्ध-
र्मिकस्य संशयः, चन्द्रः प्रकृष्टप्रकाशो नवेत्यादि संशयाभावस्तु
प्रकृष्टप्रकाशवैशिष्ट्यनिश्चयात्, (अन्यथा प्रादेशपरिमितश्चन्द्र
इत्यादिलक्षणमुखेन चन्द्रस्वरूपावधारणेऽपि प्रकृष्टप्रकाशो न
वेत्यादिसंशयनिवृत्तिप्रसङ्गात् .) ननु स्वरूपमात्रगोचर-
३०५ स्यापि चरमसाक्षात्कारस्य एक कोटिकसंशयविरोधित्वम-
स्तीति चेत्, द्विकोटिकसंशयाविरोधितया तस्यापि प्राथ-
मिकापातप्रतीतिवदनवधारणत्वेन कस्यापि संशयस्य तेना-
विरोधात्. किञ्च अयं घट इत्यादिनिश्चये घटोरक्तः
कृष्णो वेत्यादिसंशयानिवर्तकत्वादव्याप्तिः. यत्किञ्चित्संशय-
३१० निवर्तकत्वे तु स्थाणुर्वा पुरुषो वेति संशयेऽपि पुरुषत्वस्थाणु-
त्वयोः परस्परविरोधभानात् स्थाणुत्वं पुरुषवृत्ति न वा
पुरुषत्वसमानाधिकरणं नवेत्यादिस्थाणुत्वसंशयनिवर्तकत्वाद-
तिव्याप्तिः ; न चेष्टापत्तिः, संशयनिश्चयविभागानुपपत्तेः ;
यच्चैककोटिकज्ञानस्य संशयत्वसमर्थनार्थमुक्तम् अनभ्यासद-
३१५ शापन्नजलज्ञानानन्तरमिदञ्जलन्नवेतिसंशयदर्शनात्तत्संशय-
कोटिनिक्षिप्तं, निश्चिते संशयायोगादिति, तदपि न,
ज्ञानप्रामाण्याप्रामाण्यसन्देहादर्थसन्देहोपपत्तेः. यदि तस्या-
र्थसन्देहपर्यवसानं ब्रूषे, तर्हि दोषजन्यत्वतदभावसन्देहादर्थ-
सन्देहोऽस्तु. यद्वा प्रामाण्यतदभावकोटिकसंशयोऽस्तु, तदा-
३२० नीञ्जले जलत्वाभावावगाहनाभावेन विरोधाभावात्, विशे-
ष्यवृत्ति(व्यावृत्त्य) प्रकारकत्वतदभावसन्देहाद्वा संशयोऽस्तु.

यद्वा तद्वति तत्प्रकारकं तद्भाववति तत्प्रकारकं वेत्येव प्रामाण्याप्रामाण्यसंशयोऽस्तु. न च तद्वत्त्वस्य ग्रहात्तत्संशया-सम्भवः, इदञ्जलमितिनिश्चये इदन्त्वावच्छेदेन इदं जल-
७२५ त्ववेतिसंशयो मा भूत्, ज्ञाने प्रामाण्याप्रामाण्यसंशयेकोवि-रोधः, अप्रामाण्यस्य तद्भाववत्त्वघटितत्वात्तद्वत्त्वग्रहे कथन्त-द्भाववत्त्वग्रह इति चेन्न; इदन्त्वावच्छेदेन तद्वत्त्वग्रहात्तद-वच्छेदेन तद्भाववत्त्वाग्रहादिरोधाभावात्, यदवच्छेदेन यत्र यद्ग्रहः तदवच्छेदेनैव तत्र तद्भावग्रहोविरुध्यते,
७३० न तु तत्र तद्भावग्रहमात्रं, तथा सति शुक्तीरजतन्न भवतीति शुक्तित्वावच्छेदेन रजतत्वाभावग्रहे इदं रजत-मिति भ्रमाभावप्रसङ्गात्, तस्मात् प्रामाण्यसंशयाधीनार्थ-संशयस्य सार्वलौकिकत्वात् स्वयन्तदुपपादनासामर्थ्यमात्रेण तदपह्नवस्स्वाकौशलाविष्करणमेव. किञ्च फलाभावाच्छ्र-
७३५ वणमननोपपद्यते, न चाद्वैतसाक्षात्कार एव फलं, तस्य संश-यानिवर्तकत्वेनेष्यमाणत्वासिद्धेः, समानप्रकारकत्वेनैव निश्च-यस्य निवर्तकत्वात्. ननूक्तं ज्ञानं समानविषयतया संशय-निवर्तकं, न तु समानप्रकारकतया, अन्यविषयात्तददर्शनात्. समानविषयत्वमप्यपेक्षणीयमिति चेत्, संशयादपि प्रसङ्गः,
७४० निश्चयत्वमप्यपेक्षितमितिचेत्तर्हि समानविषयनिश्चयोनि-वर्तकः लाघवादिति. मैवं, आत्माश्रयप्रसङ्गात्, संशयनिवृ-त्त्यनुकूलस्वरूपविशेषवत्त्वं निश्चयत्वमिति हि त्वयोक्तम्, इद-मिति ज्ञानानन्तरमयं घटो न वेति संशयाभावापत्तेश्च.

ननूक्तं घटत्वादिवैशिष्ट्यविषयत्वाभावात् समानविषयत्वाभा-
७४५ वेन न तत् संशयन्निवर्तयतीति, तत् किं यावत्संशय-
विषयविषयकत्वेन निवर्तकत्वं, तर्ह्यसम्भव एव, स्थाणुत्वा-
दिनिर्णयस्य पुरुषत्वविषयत्वाभावात्, तस्मात् संशयधर्मि-
तावच्छेदकावच्छिन्न धर्मिताकसंशयकोटिविरुद्धप्रकारक-
ज्ञानं संशयनिवर्तकम्. अत्र यदुक्तम् एवं सत्ययं घट इति
७५० ज्ञानात् तद्गोचरे घटत्वे इदं घटत्वन्नवेति संशयो न
निवर्तेत, तस्मिन् घटत्वातिरिक्तप्रकाराभावादिति, तन्न,
इष्टापत्तेः, अयं घट इति निश्चये सत्यपि संस्थानवादिभि-
स्तत्र तत्संशयस्य जातिवादिभिस्तत्र तत्संशयस्याङ्गीका-
रात्. किञ्च समानविषयावधारणस्य निवर्तकत्वेऽपि तत्र
७५५ संशयो न निवर्तेत, घटत्वत्ववैशिष्ट्याविषयत्वेन समानविष-
यत्वाभावात्. किञ्च अयं घट इति ज्ञानस्य घटत्वविषय-
संशयनिवर्तकत्वे एकस्मिन् घटे घटत्वेन ज्ञाते घटान्तरे
अयं घटो न वेति संशयो न स्यात्. यदुक्तं समानप्रकार-
कज्ञानस्य निवर्तकत्वे सन्निकृष्टे घटे घटत्वसामान्यप्रत्यास-
७६० त्तिज्ञानेन घटान्तरेऽपि संशयो निवर्तेतेति, तन्न, तथापि
घटो रूपीति वाक्याद् घटत्वावच्छेदेन रूपसंसर्गे ज्ञाते
अयं घटो न वेति संशयो न स्यात्, समानविषयकत्वात्,
यदि च तस्यानवधारणत्वं, तदा घटोरूपी नवेत्यपि सन्देह
प्रसङ्गात्, यदि च घटत्ववैशिष्ट्यांशेऽनवधारणत्वं, तदा घटत्वं
७६५ रूपसमानाधिकरणन्नवेति सन्देह प्रसङ्गः, अयं घट इत्य-

निश्चयादयं घट इति सन्देहो भवतीति चेत्, तर्हि प्रकृते सामान्यासक्तिस्थलेऽपि तथैव भाव्य. अयञ्च परिहारोऽस्मन्मत एव सम्भवति, न तु त्वन्मते, त्वया समानविषयत्वेनैव निवर्तकत्वस्वीकारात्, तस्य च तत्रापि सत्त्वात्.

३७० यदुक्तं समानप्रकारकस्य निवर्तकत्वे प्रमेयवानिति ज्ञानात् स्थाणुत्वादिप्रकारकात् संशयनिवृत्त्यापत्तिरिति, तन्न, कोटौ कोटिद्वयसामान्यधर्मप्रकारकत्वस्य प्रतिबन्धकत्वात्. न चैवं सति द्रव्यमिति ज्ञानात् संशयनिवृत्तिस्स्यादिति त्वदुक्तं भज्येत, धर्मिणि सामान्यधर्मप्रकारकत्वस्य प्रतिबन्धकत्वसम्भवादिति वाच्यम्, इदन्त्वस्य सामान्यधर्मत्वाभावस्योक्तत्वात्, न चैवं स्थाणावयं स्वनिष्ठधर्मवानिति ज्ञानादपि निवृत्त्यापत्तिः, प्रतिबन्धकाभावादिति वाच्यम्, अन्यतरकोट्यसाधारणत्वेनानिर्धारितधर्मस्य सामान्यधर्मपदेन विवक्षितत्वात्, न चैवं प्रमेयस्थाणुत्ववानयमिति ज्ञानात्

३८० संशयनिवृत्त्यभावापत्तिः, कोटौ सामान्यधर्ममात्रप्रकारकत्वस्य प्रतिबन्धकत्वात्. यद्वा कोटौ कोटिद्वयसामान्यधर्ममात्राप्रकारकं समानप्रकारकसमानविषयावधारणं निवर्तकमस्तु, निर्वर्तकानुपपत्तौ च विस्तरोद्रष्टव्य इति.

**किं कथमित्यत्रेति,** सामान्याकारस्याप्रतीतेरिति भावः.

३८५ ननु जिज्ञासामात्रं खण्डयतो ब्रह्मजिज्ञासाखण्डनमिष्टमेवेति शङ्कामनूद्य परिहरति **यः पुनरिति. ज्ञातेति,** किं ज्ञातांशे जिज्ञासा उताज्ञातांशे; आद्ये वैयर्थ्यं, द्वितीये

ज्ञानाभावादेव न जिज्ञासा, तत्साध्यत्वात्तस्याः. **इतीति,** इत्यस्येत्यर्थः. **कः प्रकृतोपयोग** इति, सर्व(भाव)खण्डकस्य
७९० तव उक्त विकल्पेन जिज्ञासायाः पारमार्थिकत्वखण्डनमेवेष्टं, न तु व्यावहारिकत्वखण्डनमपि, अस्माभिस्तु व्यावहारिक्यपि जिज्ञासा ब्रह्मणि न सम्भवतीति प्रतिपाद्यते, तत्परिहारे च पारमार्थिकत्वखण्डनेष्टत्वोद्भावनस्य क उपयोग इत्यर्थः. व्यावहारिकजिज्ञासापि ब्रह्मणि नाङ्गीक्रियत
७९५ इति तु त्वया न वक्तुं शक्यत इत्याह **दृष्टेति.** लोके हि ज्ञानार्थप्रवृत्त्यनुपपत्त्या जिज्ञासेष्यत इत्याशङ्क्य तत् प्रकृतेऽपि तुल्यमित्याह **अन्यथेति,** जिज्ञासानङ्गीकारे आरम्भहेत्वभावेन शास्त्रमुच्छिद्येतेत्यर्थः. **निर्विशेष** इति, निर्धर्मक इत्यर्थः. **विशेषायोगादिति,** विशेषस्य सामान्यप्रतिसम्बन्धित्वेन
८०० विवक्षितः, प्रतिसम्बन्धिभूतस्य सामान्य(धर्म)स्याभावे तस्यासम्भवादिति भावः, निर्धर्मकत्वाच्च विशेषो न सम्भवतीति चकारस्य भावः. **तदिति,** सामान्यज्ञानविशेषज्ञानाभावयोरुपपत्तिरित्यर्थः, सामान्यप्रमा विशेषप्रमाविरहश्च न प्रयोजकौ, गौरवादिति भावः. सामान्यशब्देन सत्त्वरूपं
८०५ विवक्षितम्, उत सामान्यधर्ममात्रम्, अथ वा सत्त्वसामान्यं, नाद्य इत्याह **सामान्यरूपस्येति.** न द्वितीय इत्याह **न हीति.** कृत्स्नस्यापि सामान्यस्य कल्पनायां सत्त्वरूपकल्पनायां च श्रुतिबाधमप्याह **नचेत्यादि.** न तृतीय इत्याह **अत एवेति.** अपसिद्धान्तादिभिः, ब्रह्मणि सत्त्वस्य

८१० स्वरूपादनन्यत्वोक्तेरिति भावः. एतेनाद्यन्नवीनमतन्निरस्तं, तथा हि आपातप्रतीतिरेव धर्मिज्ञानं, सा च विचारात् प्रागेव साङ्गाध्ययनेन विदितपदार्थसङ्गतिकाद्वाक्यादेवोत्पद्यते, सा च ब्रह्मणि सत्त्वप्रकारिका, सत्त्वप्रकारकत्वादेवाखण्डविषयाज्ञानं न निवर्तयति, तन्निवर्तकञ्चाखण्डविषयमेव नि-
८१५ ष्प्रकारकं ज्ञानं, तस्य चानुत्पत्तेस्तज्ज्ञानेच्छा सम्भवत्येव, सैव जिज्ञासेति हि तन्मतं, तदनुपपन्नं, सत्त्वप्रकारकज्ञानस्यापातत्वं हि अविद्यानिवृत्त्यनर्हत्वं, तच्च भिन्नविषयत्वात् भ्रमत्वाच्चेत्यभिमतं, तच्चनोपपद्यते, स्वरूपोच्छित्तेः, श्रुतिबाधप्रसङ्गाच्च. किञ्च तदेव ज्ञानं ब्रह्मविषयं तदज्ञाननिवर्तकं
८२० स्यात्, न चाखण्डविषयाज्ञानस्य तज्ज्ञानेनैव निवर्त्यत्वात् सत्त्वविशिष्टज्ञानन्ननिवर्तकमिति वाच्यं, सत्त्वविशिष्टविषयस्याप्यज्ञानसमानविषयत्वेन तन्निवर्तकत्वोपपत्तेः; न च भ्रान्तित्वादनिवर्तकता, शुक्तिरजतज्ञानस्य द्रव्यत्वविषयस्य द्रव्यत्वाज्ञाननिवर्तकत्वात्, न चाधिकविषयत्वादनिवर्तकता,
८२५ शुक्तिज्ञानस्य शुक्तिगतरूपादिविषयत्वेऽपि शुक्त्यज्ञाननिवर्तकत्वात्, न च विशिष्टविषयत्वादखण्डाज्ञानसमानविषयत्वाभावः, जिज्ञासाया अपि समानविषयधर्मिज्ञानसाध्यत्वेन सत्त्वविशिष्टज्ञानस्याखण्डजिज्ञासाजनकत्वोपवर्णनविरोधात् ; नचाज्ञानमखण्डत्वविषयं, सत्त्वविशिष्टज्ञानन्तु न तथेति न
८३० तन्निवर्तकमिति वाच्यम्, अखण्डत्वस्य स्वरूपातिरेके अद्वैतनाशानाविषयत्वात्, स्वरूपत्वे सत्त्वविशिष्टज्ञानविषयत्वाव-

ग्रहाभावात्, न चाखण्डत्वप्रकारकज्ञानमेव तत्प्रकारकाज्ञान-
निवर्तकं, निष्प्रकारकज्ञानस्यैव निवर्तकत्वमिति सिद्धान्तभ-
ङ्गात्. स्वरूपातिरिक्ताप्रकारकत्वमेव निष्प्रकारकत्वमिति
८३५ अखण्डत्वस्य स्वरूपाभेदात्तत्प्रकारकस्यापि निष्प्रकारकत्वान्न
सिद्धान्तभङ्ग इति चेन्न, अखण्डत्वादिप्रकारकज्ञानस्यापि
सत्त्वविशिष्टज्ञानवद्विदितपदार्थसङ्गतिकस्य विचारात्प्रागेवो-
त्पत्तेः, न च वाक्यद्वयादिरूद्धानेककोट्युपस्थितौ मानससंश-
याज्जिज्ञासोपपत्तिरिति वाच्यम्, अद्वैतवाक्यजन्यप्राथमिका-
८४० खण्डत्वप्रकारकज्ञानादेवाज्ञाननिवृत्तौ कुतस्संशयः, कुतस्त-
राञ्जिज्ञासेति. वैफल्यमिति, दृश्यमाणज्ञानस्य भ्रमत्वेन
प्रपञ्च भ्रमानिवर्तकत्वादिति भावः. कथं वैफल्यं कल्पित-
विषयकज्ञानस्यैव फलत्वादित्याशङ्क्य एवं सति वैदिकत्वभूमि-
काकञ्चुकप्रच्छन्नमौद्धत्वमेवाविष्कृतं स्यादित्याह न हीति,
८४५ वेदान्तवाक्यानां मिथ्यावस्तुविषयतयाऽतत्त्वावेदकत्वाङ्गीका-
रादिति भावः. तस्य च विशेषस्य प्रातिभासिकत्वं
व्यावहारिकत्वं च न सम्भवतीत्यभिप्रायेणोक्तमसदित्यादि.
गूढाभिसन्धिशङ्कते कल्पितेत्यादि, कल्पिताकारः प्रपञ्चः,
मिथ्यावस्तुनो मिथ्यात्वेन बोधने च न वेदाप्रामाण्यमिति
८५० तुशब्दार्थः. अयमाकार इति, प्रपञ्च इत्यर्थः, प्रपञ्च-
स्सत्यो मिथ्यावेति सन्देहात्तस्यैव जिज्ञास्यतास्यादित्यर्थः.
ततः किमिति, शुक्त्याद्यधिष्ठानतत्त्वज्ञानस्यैव रजतमिथ्या-
त्वज्ञानस्यापि मिथ्यारजतनिवर्तकत्वदर्शनात् प्रपञ्चमिथ्यात्व-

ज्ञानमपि प्रपञ्चनिवर्तकमेवेति जिज्ञासाया अवैफल्यादिति
८५५ भावः. **श्रुतीति,** "तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समि-
त्पाणिः, प्रोवाच तान्तत्त्वतो ब्रह्मविद्याम्, तद्विजिज्ञासस्व"
इत्याद्याःश्रुतयः, "ब्रह्मजिज्ञासा, जन्माद्यस्य यत" इत्या-
दीनि सूत्राणि. श्रुति सूत्रयोर्यथाकथञ्चित्प्रपञ्चमिथ्यात्ववि-
षयत्वेन नयने च स्वारस्य भङ्ग इत्यभिप्रेत्योक्तं **स्वरसेति**.—
८६० **ब्रह्मात्मैक्यमिति,** आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता
आरभ्यन्त इति त्वयैवोक्तेरिति भावः. अभिसन्धिमुद्घाटय-
न्नङ्कते **कल्पितभेदेति,** तद्धीः—ब्रह्मात्मैक्यधीः, भेदाभाव-
स्याभेदत्वादिति भावः. **तद्विवादेति,** तेनेत्यर्थः, तस्मिन्नि-
तिशेषः. अथ वा, **तदिति,** तस्मिन् तेनेति शेषः, तस्मिन्नित्य-
८६५ स्य ऐक्यांश इत्यर्थः. यदि प्रपञ्चमिथ्यात्वमेव ब्रह्मात्मैक्यं
स्यात् स्याद्विवादविलयः, न च तथा ब्रूमः, किन्तु भेद-
मिथ्यात्वज्ञानाधीनं ब्रह्मात्मैक्यज्ञानमिति, तत्र च माध्य-
मिकेन भेदमिथ्यात्वाङ्गीकारेऽपि जीवब्रह्मणोरपि मिथ्या-
त्वाङ्गीकारेण तदैक्यानङ्गीकारात् तेन विवादो युज्यत
८७० इत्याशङ्क्याह **यच्चेति. तदपीति,** कल्पिताकारशून्यत्वमि-
त्यर्थः. **सामान्येति,** धर्मिज्ञानेन विषयीकृतमित्यर्थः.
**बहिष्ठस्येति,** धर्मिज्ञानाविषयस्येत्यर्थः. **मिथ्यात्व इति,**
आकारशून्यत्वमाकाराभावः, आकारशून्यत्वमिथ्यात्वमाका-
राभावाभावः, सत्राकार एव वा तत्समनियतधर्मो वा, अतः
८७५ कल्पिताकारशून्यत्वस्य मिथ्यात्वे कल्पिताकारस्य सत्यता

स्यादित्यर्थः. तत्र हेतुमाह साहित्येति. सङ्घर्षः-विरोधः, गोत्वाश्वत्वयोर्विरोधेऽपि नान्यतराभावे अन्यतरसत्त्वमिति सहजेत्युक्तम्, सहजत्वन्निरुपाधिकत्वं, गोत्वाश्वत्वयोः परस्पराभावव्याप्यत्वाद्विरोधः, भावाभावयोस्तु स्वत इति भावः.

८८० ननु स्वतोविरोधेऽप्यन्यतरसत्त्वे इतराभावनियमोऽस्तु, अन्यतराभावे इतरसत्त्वनियमः कुत इत्यत्राह परस्परविरोध इति, अत्र परस्परविरोधपदेन परस्पराभावात्मकत्वं विवक्षितं, ययोस्स्वाभाविकोविरोधः तयोरन्यतरत्वमवश्यं वक्तव्यम्, अन्यथा घटाभावोनास्तीत्युक्ते घटार्थिप्रवृत्तिर्न स्यात्,

८८५ "द्वौ नञौ प्रकृतमर्थं सूचयत" इति तान्त्रिकव्यवहारस्योच्छिद्येतेति भावः. दूषणान्तरमाह यदीति. कल्पिताकारराहित्यनिवृत्तिरिति, कल्पिताकारराहित्यस्य ज्ञानेन तदितरकल्पिताकारनिवृत्तावपि तदनिवृत्तेर्मुक्तेर्मुक्तिरिति भावः. यदिकल्पिताकारराहित्यं तन्निवृत्तिरिति पाठः,

८९० तदा कल्पिताकारराहित्यमिति हेतुगर्भं विशेषणं तन्निवृत्तिः-कृत्स्नप्रपञ्च निवृत्तिः, कल्पिताकारराहित्यात्मिका तन्निवृत्तिः कथं स्यात्, कृत्स्नप्रपञ्च निवृत्तिरपि कल्पिताकारराहित्यविशेषः, अतस्तस्यापि कल्पितेति वक्तव्यम्, कल्पितत्वादेव स्वप्रतियोगिकत्वं वक्तव्यम्, तच्च व्याहतम्, अतः

८९५ कृत्स्नप्रपञ्चनिवृत्तिस्वरूपमेव कथं स्यादित्यर्थः. ननु कल्पिताकारराहित्यस्य मिथ्यात्वेऽपि न तन्निवृत्तेर्मिथ्यात्वं, "विभेदजनकेज्ञान" इत्यादिना मोचदशायां भ्रमाभावावगमादिति

चेत्तर्हि कल्पिताकारराहित्यमपि श्रुतत्वान्नमिथ्या, यदि च
राहित्यस्य स्वरूपान्तर्भावे जिज्ञास्यत्वानुपपत्तेः तद्बहिर्भावे
९०० च सत्यत्वे अद्वैतहानेर्मिथ्यात्वमनुमन्यसे; तर्हि प्रपञ्चनिवृ-
त्तेरपि स्वरूपान्तर्भावे साध्यत्वानुपपत्तेः तद्बहिर्भावे वाच्ये
सत्यत्वे अद्वैतहानेर्मिथ्यात्वमनुमन्यस्व, ज्ञाननिवर्त्यत्वाभावात्
कथम्मिथ्यात्वन्निवृत्तेरिति चेत्, असाध्यत्वादैतहानिप्रसङ्गाभ्यां
कथं सत्यत्वं, तर्हि किं कुर्म इति चेत्, श्रूयतामयमुपदेशः,
९०५ परस्परव्याहतवैदिकमाध्यमिकमतद्वयाग्रां विहायान्यतर-
स्मिन्नेव दृष्टोभव. सतः—ब्रह्मणः. एवमशेष विशेष शून्य-
मित्यनेन सूचितव्याघातोदर्शितः, इदानीमनाद्यविद्यान्ध-
कारितमित्यनेन सूचितव्याघातः प्रदर्श्यते. तत्राविद्याश्रयत्वं
तदावृतत्वं च विवक्षितं, तत्राश्रयत्वसूचितोव्याघातइदानीं
९१० प्रदर्श्यते. किमशुद्धं ब्रह्मजिज्ञास्यमुत शुद्धमिति विकल्प्याद्यं
दूषयति किञ्चेति. तथा प्रकाशस्येति, अशुद्धिविशिष्ट-
प्रकाशस्येत्यर्थः, अत्रचाशुद्धिरेव वेदितव्याकार इति विवक्षि-
तम्, पूर्वंच उपहिते उपधानातिरिक्तधर्मविशेष इति भेदः.
प्रागेवेति, अविद्याविशिष्टप्रतीतेरनादित्वादिति भावः.
९१५ कथञ्चेति, अशुद्धेर्मिथ्यात्वादिति भावः. दामदर्वीकरः
दामाधिष्ठानकदर्वीकरः. भ्रान्त्यन्तरेति, निवर्तकभ्रमस्या-
निवृत्तेरिति भावः. आत्यन्तिकत्वासिद्धेरिति, निवृत्तेरिति
शेषः. तन्निवर्तकं तत्त्वज्ञानान्तरमस्त्वित्यत्राह तद्विलाप-
केति, सत्यमिथ्यात्वविकल्पक्षोभादिनेत्यर्थः. अहेतुकेति,

९२० आदिशब्देन प्रतियोगिमात्रहेतुकविनाशादिर्विवक्षितः, अविद्याविशिष्टज्ञानस्याविरोधाच्च निवर्तकतेत्यपि बोध्यम्. नित्यशुद्धमित्यनेन सूचितं व्याघातं दर्शयितुं द्वितीयकल्प-माशङ्कते **शुद्धन्तर्हीति**, जिज्ञासोर्वेदितव्यमित्यनुषज्यते. दूषयति **जिज्ञास्यमपीति**. अशुद्धस्य जिज्ञास्यत्वपक्षे तस्य

९२५ ज्ञानविषयत्वसम्भवेऽपि फलाभावाज्जिज्ञासानोपपद्यत इत्यु-क्तम्, शुद्धस्य तु ज्ञानविषयत्वमत्यन्तमेवायोग्यत्वात् जिज्ञास्य-त्वन्नोपपद्यत इत्यभिप्रायेणाह **अपीति**. ननु शुद्धं ब्रह्म जिज्ञास्यमित्यत्र शुद्धस्येष्यमाणज्ञानविषयत्वं नाभिमतम्, किन्तु यथा शाखायां चन्द्रसम्बन्धाभावेऽपि तत्सम्बन्धभ्रमाच्छा-

९३० खायां चन्द्रमा इत्यत्र शाखा चन्द्रस्योपलक्षणं, तथा विशुद्ध-ज्जिज्ञास्यमित्यत्रापीष्यमाणं ज्ञानमुपलक्षणमेवेति शङ्कते **शाखेति**. **कथमिति**, दृष्टान्तार्थं दृष्टान्तोपादानं, यथा दृष्टान्ते शाखालक्षणोपलक्षणजन्यज्ञानविषयतामन्तरेण नोप-लक्ष्यत्वं, तथा दार्ष्टान्तिकेऽपीष्यमाणज्ञानलक्षणोपलक्षणाधीन-

९३५ ज्ञानविषयतामन्तरेण नोपलक्ष्यत्वमित्यर्थः. तत्प्रयुक्तदोषः अशुद्धत्वजडत्वादिः. **सोऽपीति**, सः—उपलक्षणाधीनः, सत्यमिथ्याविभागमन्तरेण. तदधीनज्ञानविषयतामात्रेणोप-लक्ष्यत्वसंभवादिति भावः, उपलक्षणाधीनबोधविषयत्वस्य भ्रान्त्यन्तरसिद्धत्वे तद्भ्रमविषयताया अपि भ्रमान्तरसिद्धता

९४० वाच्येत्यनवस्थास्यादिति स्वयमेव स्ववेद्यताया भ्रम इत्युक्तम्. **विलीनमिति**, स्ववेद्यताया भ्रमविषयत्वे स्ववेद्यत्व-

रूपवेद्यमिथ्यात्वमन्तरेण भ्रान्तित्वायोगेन स्ववेद्यत्वाभावे उपलक्षणत्वेनाभिमतज्ञानस्योपलक्षणत्वासंभवात् वेदान्तवाक्यानामुपलक्षणीभूतज्ञानजनकत्वमपि न संभवतीति
९४५ कथञ्चिदप्यावेदकत्वाभावात्, आवेदकत्वेऽपि फलीभूतज्ञानस्य भ्रमत्वाच्च न तत्त्वावेदकत्वं संभवतीत्यर्थः. भ्रान्तिसिद्धप्रातिभासिकस्वविषयत्वमादायैव उपलक्षणाधीनज्ञानविषयत्वसंभवेनोपलक्षणत्वेनाभिमतज्ञानविषयत्वस्यैव प्रातिभासिकस्य वक्तुं शक्यतया उपलक्षणपर्यालम्बननैष्फल्यमित्याह उपलक्षणेति.
९५० स्ववेद्यताया भ्रान्तिरित्यनन्तरमसत्यस्येति यदि पाठः तदा ज्ञप्त्या तत्स्वरूपस्यानभ्युपगमादित्यस्य शुद्धस्य केनापि मिथ्यार्थेनासंसर्गादिति भावः, भ्रान्तिरसत्यस्येत्यस्यासत्यत्वेऽपि भ्रान्तित्वाद्दोष इत्यर्थः. यद्वा स्वसमानसत्ताकं यज्ज्ञानं तद्विषयत्वमेव जडत्वादिप्रयोजकमित्यसत्यस्येत्यस्य भावः.
९५५ स्ववेद्यताया भ्रान्तिरित्यत्रोत्तरं विलीनमित्यादि, असत्यस्येत्यत्रोत्तरमुपलक्षणेति. किमर्थेति, शुद्धातिरेकेणाविद्यानिवृत्तेरभावादिति भावः. नन्वस्तु ब्रह्माभेदार्थाजिज्ञासा "ब्रह्म वेद ब्रह्मैव भवती"ति ब्रह्माभेदस्यापि फलतया प्रतिपादनादिति तत्राह अन्तत इति, अभेदस्य नित्यसिद्ध-
९६० तया साध्यत्वायोगात्तत्साध्यंतोक्तिरपि शुद्धावेव पर्यस्यति, सापि चेन्नित्या वैयर्थ्यमेवेति भावः. तदध्यवसायेनेति, शुद्धताध्यवसायेनापि शुद्धिसिद्ध्यर्थेन भवितव्यमित्यर्थः. आरोपिताशुद्धीति, नित्यशुद्ध्यध्यवसायस्येति शेषः,

*नित्यशुद्ध्यध्यवसायेऽपीति प्रतीयमानकर्तृ(क)त्वादिरूपाशुद्धेर्मि-*
९६५ थ्यात्वज्ञानेन साधनानुष्ठानेन तन्निवृत्तेस्साफल्यमिति भावः.
नित्यशुद्धेः परमार्थत्वादारोपिताशुद्ध्याश्च न विरोध इति
सदृष्टान्तं शङ्कते उपरक्त इति. ब्रह्मण्येवेति, "तदिदं
विविधकुतर्ककल्पककल्पित"मिति भाष्येण तथावगमादिति
भावः. शुक्तिरजतादौ पराभिमतन्मिथ्यात्वमभ्युपगम्य अवि-
९७० शेषात्परोचस्थलेऽपि तदापादनमभिप्रेत्याभ्युपगमादित्युक्तम्.
भ्रमाद्याधारतयेति, अशुद्धिं प्रसञ्जयाम इत्यनुषङ्गः,
आदिशब्देन तत्कार्यसुखदुःखशोकमोहादिः. अस्मदभिमता-
शुद्ध्याश्रयत्वेनायन्दृष्टान्त इत्याह न तथेति. स्वात्मनीति,
इदञ्च ब्रह्मण्यारोपस्य स्वविषयत्वादुक्तं. वस्तुतस्तु स्वविषयत्वे न
९७५ तात्पर्यं, किन्तु आरोपाश्रयत्वमात्रे, अन्यविषयारोपस्यापि
दोषत्वात्, अध्यासस्य सविषयत्वाद्रागस्य च प्रकृतत्वाद्राग-
मध्यस्थतीत्युक्तम्, अन्यारोपस्यापि दोषत्वात्. एवं भ्रमरूपा-
शुद्ध्यभावात् दृष्टान्तवैषम्यमुक्तम्, इदानीन्तदङ्गीकृत्यापि
वैषम्यमाह नचतत्कर्तृक इति, अन्यकर्तृक इति दृष्टान्तार्थं.
९८० भ्रान्तिरूपाशुद्धिरस्त्यपि न सैत्यात्म्यशुद्धिविरोधिनीत्युक्तं,
तर्हितद्वदेवप्रकृतेऽपि शुद्ध्यशुद्ध्योरविरोध एवास्त्वित्यचाह
इहत्विति. स्वदोषेणेति, अविद्ययेत्यर्थः, इयमप्येकाऽशुद्धि-
रित्यभिप्रायेण स्वदोषेणेत्युक्तं, यद्यप्यविद्यास्फटिकलौहित्य-
वदारोपिता, आरोप्यदोषत्वेन नाशुद्धिं प्रसञ्जयाम इति
९८५ चोक्तं, तथाप्यारोपहेतुत्वेनैव दोषत्वमिति भावः, भ्रमाश्रय-

स्वतजीवेश्वरकृपाभ्याम्, किन्तु स्वरूपेणैवेत्यभिप्रायेण स्वयमेवेत्युक्तं, भ्रान्त्यादीत्यादिशब्देनाविद्या गृह्यते. **विचारनै**ष्फल्यमिति, सत्त्वाभावेऽसत्त्वनियमादसतश्च निवृत्त्ययोगादिति विवचितम्. **तन्निवर्तन**मिति, भ्रमसत्त्व-
९९० गोचरभ्रमनिवर्तनमित्यर्थः. **अनवस्थे**ति, तत्सत्त्वभ्रमस्य मिथ्यात्वे पुनर्निरसनीयाभावान्नैष्फल्यम्, तत्सत्त्वभ्रान्तिरप्यसत्येव सतीव भातीति चेदनवस्थेत्यर्थः. यद्वा आरोपिताशुद्धीति भावप्रधानोनिर्देशः, आरोपविषयत्वमिति यावत्. **आरोपे**ति, आरोपस्याशुद्धित्वादिति भावः.
९९५ उपरक्ते-रक्तिमारोपविषये. **आरोप्यदोषत्वेने**ति, दोषारोपविषयत्वेनेत्यर्थः. **स्वरूपे**णेति, शुद्धेस्स्वरूपगतत्वाच्च विरोध इति भावः. तस्य-ब्रह्मणः, तद्भावः-जीवेश्वर भावः. जीवेश्वरभावयोरपि कल्पितत्वात् कल्पकान्तराभावाच्च ब्रह्म स्वयमेव कल्पयतीति वक्तव्यम्, ततश्च
१०००. ब्रह्मणो भ्रान्तिरनिवार्येति भावः. ईश्वरस्य सर्वज्ञत्वाच्चापि भ्रमोऽनुपपन्न इत्याह **कथ**मिति. जीवेश्वरभावौ चासुपपन्नावित्याह **कथ**ञ्चेति, 'सर्वज्ञः-ईश्वरः, अज्ञो-जीवः. **उत्तर**न्त्वेति, शुद्धिर्नित्याऽनित्यावेति विकल्पे द्वितीयकल्प इत्यर्थः. नाद्य इत्यत्र वैराग्योपदेशवैयर्थ्यं
१००५ हेतुः, तत्र हेतुस्त्रिवर्गेति. हेत्वन्तरमाह, **बन्धमो**क्षयोरिति. **व्युत्क्रम**तेति, शुद्धेर्विनाशे संसारोत्थानात् शुद्धिकाले च विरोधेन संसारासंभवादिति भावः.

अतिरेकेणेति, सत्यत्वे अद्वैतहानिः, मिथ्यात्वे अनुद्देश्यता, नहि मिथ्यावस्तु वाञ्छमानो मुमुक्षुर्मिथ्योत्पादनार्थं
१०१० श्रवणादौ प्रवर्तेत इति भावः. ननु अनित्यशुद्धियोगिनो- नित्यशुद्धियोगिनश्च जिज्ञास्यतायाः सिद्धान्ते समर्थनात्क- थमयं विकल्पश्शोभते, तत्राह यद्यपीति, आश्रयभेदा- च्छुद्ध्यशुद्ध्योर्नविरोधः, साध्यत्वेनाभिमत शुद्धेस्स्वरूपादन्य- त्वान्नसाध्यत्वविरोधः, सत्यत्वान्नमिथ्यात्वप्रयुक्तजिज्ञास्यत्व-
१०१५ विरोधः. अशेषविशेषशून्यत्वानाद्यविद्यान्धकारितत्वाभ्यां जिज्ञास्यत्वस्य व्याघातं प्रकारान्तरेण दर्शयति उदारे- त्यादिना. प्राची-वैदिकी. भ्रान्तत्वे कथमजिज्ञास्य- तेत्यत्राह स्वरक्षणेति. तत्त्वतस्सार्वज्ञ्याभावेऽपि कल्पित- सार्वज्ञ्यात्फलप्रदानोपयोगिभूताराधनाराधकतद्दिष्टपरि-
१०२० ज्ञानसंभवात् तदभावेऽपि ध्यानादेः पुण्यतीर्थस्नानादि- वददृष्टार्थत्वसंभवाच्च कथं ब्रह्मणो न जिज्ञास्यत्वमिति शङ्कते कल्पितेति, सार्वज्ञ्यादीत्यादि शब्देन फलप्रदा- नोपयोगिदयादिगुणान्तरं गृह्यते. सर्वैरिति, तथाच तत्र न व्यावहारिकं सार्वज्ञ्यमिति भावः. अविशेषा-
१०२५ दिति, कैश्चित् ब्रह्मण एवानभ्युपगमादिति भावः. महत्त्वं किं प्रामाणिकत्वम् उतप्राचुर्यम्, नाद्यइत्याह सर्वेषामिति, सर्वे सर्वत्रभ्रान्ता इति त्वियुष्माभिरिष्यते, सर्वस्य मिथ्यात्वाङ्गीकारात्; ततश्चयुष्मन्मते कस्यापितत्त्व- दर्शित्वाच्चपमहत्त्वं न सिध्यतीत्यर्थः, आदिशब्देन

१०३० तत्त्वार्थोपदेष्टृत्वं गृह्यते, तदतिरिक्तं न प्रामाणिकत्वं, भ्रान्तस्यापिप्रामाणिकत्वे शुक्तौ रजतभ्रमवतोऽपि प्रामाणिकत्वापत्तेरिति भावः. न द्वितीय इत्याह प्राचुर्यस्येति. यदीति, यथा तीर्थादिषेवयेश्वरः प्रसाद्यः, तथा यदीश्वरसेवयान्यः प्रसाद्यस्स्यात् स्यात्तीर्थादितुल्यतेत्यर्थः.

१०३५ क्रियेति, अथर्वकर्ममीमांसावृत्तिकारान्तरपक्षः, विनष्टमपि कर्म कालान्तरे फलञ्जनयतीति स्वभावः, अव्यवहितोत्तरकाले यथा कार्योत्पादकत्वं केषाञ्चित्स्वभाव इति तेषामाशयः. शक्तिरिति भट्टपक्षः. अपूर्वमिति गुरोः. नैगम इति, "स एवैनम्भूतिङ्गमयति, स एनम्प्रीतः

१०४० प्रीणाति, इष्टापूर्तं बहुधाजातञ्जायमानं विश्वंविभर्ति भुवनस्यनाभिः, तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः, स वा एषमहानज आत्मान्नादोवसुदान" इत्यादि श्रुतिभिः "लभते च ततः कामान्मयैव. विहितान् हितान्, अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च"त्यादि स्मृतिभिः

१०४५ "फलमत उपपत्ते"रित्यादिसूत्रैः "फलसंविभक्त्या कर्मभिरात्मानं पिप्रीषन्ति सप्रीतोऽलंफलाये"त्यादिद्रमि(वि)डभाष्यकारादिमहर्षिवचनैश्च ईश्वरस्यैव फलप्रदत्वावगमादिति भावः. भास्करादिमतेऽपि जिज्ञासानुपपत्तिमाह उक्तेति, भेदाभेदवादित्वेनानैकान्तिकत्ववादि-

१०५० त्वात् जैनगन्धित्वं, ब्रह्मणस्सर्वज्ञत्वात् तदभिन्नजीवस्यापि सर्वज्ञत्वेन विदिताविदिताकारभेदाभावाज्जिज्ञासा न

संभवति, ब्रह्मणोनित्यशुद्धत्वे तदभिन्नस्यापि जीवस्य नित्यमुक्तत्वात्तदर्था जिज्ञासा न संभवति, जीवाशुद्ध्या तदभिन्नस्य ब्रह्मणोऽप्यशुद्धत्वात् "खरचणोऽप्यशक्तस्ये"ति-
१०५५ न्यायाज्जिज्ञास्यता न संभवतीत्यादि द्रष्टव्यमित्यर्थः.

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगत-परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां जिज्ञासानिरूपणन्नाम द्वितीयस्स्कन्धः ॥

---

२१५ ढ़ानामपरिमितानाम्भेदवासनानाङ्कतिपयकालसाध्याविशद-
प्रत्ययादिमूलाल्पीयस्त्वमादैतवासनया निरसितुमशक्यत्वात्
किञ्च तत्त्वज्ञाने सति तद्विषयभावनया तद्विपरीतवासना
निरासः, तन्निरासे च तत्त्वज्ञानमिति मिथस्संश्रयस्स्यात्,
तदप्याहुः "उत्पन्ने सति विज्ञाने वासना तु निर-
२२० स्यते । निरस्तवासनस्यैव विज्ञानमिति दुर्भणम् ॥" इति,
अनुत्पन्न एव तत्त्वज्ञाने श्रवणमनननिदिध्यासनैः क्रमा-
त्तन्निरास इति चेत्, किन्तानि तत्त्वगोचराणि, उता
तत्त्वगोचराणि, पूर्वत्र विपरीतवासनायां सत्यान्तेषामप्यनु-
त्पत्तिरेव, उत्तरत्रातत्त्ववासनया कथन्तत्त्वज्ञानोत्पत्ति-
२२५ प्रतिबन्धकवासनानिरासः ; तथाच "सागरङ्गन्तुकामस्य
हिमवद्गमनोपमम् ।" इति न्यायः, किञ्चाभेदज्ञाने सिद्धे
भेदवासनानिरासस्य किमर्थमपेक्षा, तदसिद्धौ तु तत्प्रति-
पक्षवासनानिरासाभिलाषानुत्थानम्, न ह्यभेदज्ञानप्रतीति-
रभेदप्रतीतिमन्तरेण स्यात्, न च प्रतीतौ तु वैशद्यावैश-
२३० द्यादिवैषम्यन्त्वया वक्तुं शक्यम्, अभेदस्य ब्रह्मस्वरूपाय-
माणस्य सर्वदैकरूपत्वात्, विशेषग्रहे च भेदप्रतीतित्व-
प्रसङ्गात्, न च व्यावहारिकभेदोऽवास्तीति वाच्यम्, भेद-
वासनानिरासद्वारेणाभेदग्रहस्य परमार्थविषयत्वात्, अतो न
भेदवासनानिरासद्वारेण श्रवणादिचयस्य दर्शनोपकारकत्व-
२३५ मिति । यत्पुनरुक्तम्, "ब्रह्मवेद ब्रह्मैव भवति" इत्यादौ
ज्ञानमात्रस्यैव मोक्षहेतुत्वं श्रूयते, न हि प्रतिपन्नेऽर्थे

नास्तिकलक्ष्याख्यम्, अतएवोच्यते "नैषातर्केणमतिरपनेया" इति, तदप्यसत्, सामान्यशब्दानां विशेषे पर्यवसानस्य पश्वधिकरणादिन्यायसिद्धत्वात्, न्यायानपेक्ष तत्त्वनिर्णये किं
२४० शारीरकशास्त्रेणापि, ध्यानोपासनशब्दयोश्च ज्ञानविशेष-विषयतया ज्ञानसामान्यविषयवेदनादिशब्दानान्तस्मिन्विशे-षशब्दार्थ एव पर्यवसानं युक्तम्, विकल्पसमुच्चयफलान्तरार्थ-त्वाद्यसम्भवस्योक्तत्वात्,

तदुक्तम् "अष्टदोषाविकल्पेस्युर्गौरवञ्च व्यवस्थितौ। समु-
२४५ च्चयेऽनपेक्षा स्यादङ्गाङ्गित्वं न मीयते॥" इति, तथा विद्यु-पास्त्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनाच्च तयोरैकार्थ्यं सिद्धम्, "मनोब्रह्मेत्युपासीत" इति विहितमेव ह्युपासनम् "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इति फलविधानार्थमनूद्यते, न ह्यफलं विधायान्यत्सफल-
२५० मनुवदितुं युक्तम्, एवम् "यस्तद्वेद यत्सवेद" इति वेदन-शब्दमात्रश्रावी ज्ञानश्रुतिः तदर्थं "यान्देवतामुपास्से" इत्यु-पासिनानुवदति, एवमन्यत्रापि, तथा "तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनायविद्यते।" "नाहं वेदैर्न तपसा" इत्यादिश्रुतिस्मृत्योर्वेदनभक्तिशब्दाभ्याम्मोक्षोपायम-
२५५ भिधाय तदपरोपायनिषेधपरयोः परस्परार्थप्रतिक्षेपानुप पत्तेः वेदनशब्देनापि तैलधारावदविच्छिन्नभक्तिरूपज्ञान विशेष एव विवक्षित इति स्वीकर्तव्यम्; एवन्ध्यानोपासन भक्तिशब्दसमानार्थतया वेदनादिशब्दानां विशेषविषयत्वे

निश्चिते सति सामान्यमात्राश्रयणं न्यायानभिज्ञतानिब-
२६० न्धनम्,

आह च, "पशोश्छागत्वनिर्णीतौ निपुणन्यायपूर्वकम् ।
गर्दभादिषु तुल्यत्वङ्गर्दभप्रायकल्पितम् ॥" इति । यत्पुन-
र्वाक्यतस्सिद्धस्यैव ज्ञानस्य विधेयत्वन्न सम्भवतीति, तद-
स्माकमिष्टमेव, ततोऽन्यस्यैव विधानोपपादनात्; प्रत्यक्ष-
२६५ विरुद्धश्चायमविधेयज्ञानाधीनमोक्षवादः, वाक्यार्थज्ञानमात्रे-
णाविद्यानिवृत्त्यदर्शनात्,

आह च, "तत्त्वमस्यादिवाक्यस्य शतशश्श्रवणेऽपि हि ।
दृश्यते त्वमहम्पूर्वो विवादो ब्रह्मवादिनाम् ॥" इति ; ननु
येषां वाक्यार्थज्ञानञ्जातन्तेषान्तन्निवृत्तिरस्त्येव, येषान्तु सा
२७० नास्ति तेषान्तदपि न जातमित्यविरोध इति चेत् तन्न,
तज्ज्ञानाभावे तत्प्रवचनाद्यसम्भवात्, तदसम्भवे च शिष्याणां
श्रवणादेरप्यसिद्धिप्रसङ्गात्, एवमाचार्यस्यापि, अथ
वाक्यार्थज्ञानेन निवृत्ताविद्या एवाविद्यावतां श्रावका इति
चेन्न, तेषां श्रावकत्वादिव्यापारस्य त(त्का)त्करणशरीरेन्द्रि-
२७५ यादेस्तत्प्रयोजनस्य च ख्यातिलाभपूजापरानुग्रहादेस्तत्तत्प्र-
तिभासस्य चाविद्यामन्तरेणासम्भवात्; अविद्यानिवृत्तावपि
बाधितानुवृत्त्या भेदप्रतिभासात् प्रत्यक्षाद्यविरोधः प्रवचना-
द्युपपत्तिश्चेति चेत्तन्न, भवत्पक्षे बाधितानुवृत्त्यसम्भवस्य
वक्ष्यमाणत्वात्, तथाप्यविशदप्रतिपत्तिमात्रात् अविद्या
२८० विशेषवशादेव वा प्रवचनाद्युपपत्तिरिति चेन्न, विशदप्र-

तीति परामर्शरूपप्रत्यक्षसिद्धान्तयोर्विरोधात्, विशदा-
ध्यवसितसमस्ततत्त्वार्थाश्च वासुदेवादयोऽर्जुनादिभ्य उपदि-
शन्तीति हि स्वीकृतं युष्माभिः ; न चाद्वैतसिद्धान्तश्राव-
कास्स्वात्मनान्तदनभिज्ञतामनुमन्यन्ते, तथा सत्यविवादश्च.
२८५ किञ्च प्रतिवादिनो वा प्रबलाविद्याः कथम्भवत्पक्षम्प्रति-
क्षिपन्ति, न तावदविदित्वैव, निराश्रयवादायोगात्,
विदित्वा चेत्कथन्तर्हि प्रतिवादिनाविदिते भवत्पक्षे भवतां
ज्ञानानुत्पत्तिः, न हि स्वोक्तम्परे जानन्ति वयन्तु न विद्म
इति स्वस्थैरभिधेयम् ; यत्तदविद्यानिवर्तकं विशदमद्वैत
२९० ज्ञानमुदेष्यति, यच्चेदानीं श्रवणादविशदमुत्पन्नम्, तदुभय-
म्भिन्नविषयमेकविषयं वा, भिन्नविषयत्वे तस्यान्यसिद्धान्त
ज्ञानवत् तदनुपकारकत्वम् ; एकविषयत्वेऽप्यन्यूनानतिरिक्त
विषयं वा प्रकारविशेषविशेषितविषयं वा, आद्ये पश्चा-
त्तनस्याप्यनिवर्तकत्वम् इदानीन्तनस्यैव वा निवर्तकत्वं
२९५ स्यात्, अविशेषात् ; द्वितीये ब्रह्मणस्सविशेषत्वं स्यात्,
सविशेषमिदानीङ्गृहीतम्, पश्चात्तु निर्विशेषम्प्रकाशिष्यत
इति वैषम्यमिति चेत्, कथमिदं त्वयावगतम्, श्रुते-
रिति चेत्, तर्हि श्रुतेरेव निर्विशेषज्ञानमिदानीमेव जात-
मिति कः पश्चात्तनस्य विशेषः, ज्ञानमिदानीञ्जातं, व्यव-
३०० सायस्तु पश्चाद्भविष्यतीति विशेष इति चेन्न, वेदप्रामाण्य
निश्चये तदानीमेव व्यवसायोदयात्, तदनिश्चये तु पश्चा-
दपि तदसिद्धिः, प्रमाणत्वाभ्युपगमेवातदर्थविशेषे सन्देह

इति चेत्, तर्हि विशदप्रवचनप्रवीणेभ्य आचार्येभ्यो न्याय पूर्वं निश्चितार्थो वा श्रोतव्यं न पुनश्श्रवणदशायामेव
२०५ सन्दिहानेन भवता पश्चादनवरतध्यानेनापि ज्ञातुं शक्यम्, मननवदाहार्यसन्देह निराकरणाय पश्चात्तनं ज्ञानमिति चेन्न, मननेनैव सम्प्रक्षालितनिष्कम्पत्वे पुनरन्यानवकाशात्, अन्यथातिप्रसङ्गात्; अस्तु तर्हि पारोक्ष्यापारोक्ष्यलक्षणं वैषम्यमिति चेत्, विषयातिरेकाभावेनैव प्रागुक्तेन तद-
२१० सिद्धेः, सिद्धावपि बाधकत्वाबाधकत्वयोरत्यकिञ्चित्करत्वात्, परोक्षेणापि शास्त्रानुमानजन्यज्ञानेनापरोक्षभ्रमबाधस्याभ्युपगमात्, प्रत्यक्षेणापि देहात्मभ्रमादिना शास्त्रबाधानभ्युपगमाच्च; एवम् उत्पन्ना भ्रान्तिरनित्यत्वात्स्वयमेव निवर्तते, भ्रान्त्यनुवृत्तिनिवृत्तिस्तु कारणानुवृत्तिनिवृत्त्या भवति,
२१५ तदनुवृत्तौ तु बाधकस्य प्रत्यक्षत्वेऽपि भ्रान्त्यनुवृत्तिर्भवत्येव, चन्द्रैकत्वे प्रत्यक्षेऽप्यङ्गुल्यवष्टम्भादिना भ्रान्त्यनुवृत्तिवत्, वाक्य जन्यज्ञानमपरोक्षमिति, च सर्वलोकविरुद्धम्, पृथक्चैतत्प्रपञ्चयिष्यामः. तदेतदखिलमुखान्तरेण प्रपञ्चितभाष्ये "न तावद्वाक्यार्थज्ञानम्" इत्यादिना विस्तरेण.

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्याम्
अविधेयज्ञानवादभङ्गश्चतुर्थः ।

**श्रीमते निगमान्तमहादेशिकाय नमः ।**

श्रीमते निगमान्तमहादेशिकाय नमः ।

## शतदूषण्याम्

## बाधितानुवृत्तिभङ्गवादः पञ्चमः ।



नानुवर्त्तेत संसारो यत्प्रसादैकबाधितः ।
प्रसीदतु स मे देवः प्रथमाञ्जलि किङ्करः ॥

यदुच्यते, तत्त्वमस्यादिवाक्यात्तत्त्वज्ञाने जातेऽपि ब्रह्मविदा-
म्बाधितानुवृत्त्या भेदप्रतिभासादेराशरीरमनुवृत्तिः, तदनु-
५ वृत्तावपि छिन्नमूलतया दग्धपटादिवदबन्धकत्वञ्चेति, तत्र
पृच्छामः, बाधितत्वे कथमनुवृत्तिर्भवता वक्तव्या, तस्यां वा
तत्कथम्, प्रमाणबलान्मिथ्यात्वाध्यवसायेऽपि द्विचन्द्रादिष्विव
दोषमहिम्ना प्रतिभासानुवृत्तिरिति न विरोध इति चेत्,
समस्तद्वैतकुक्षिम्भरिणाप्यद्वैतविज्ञानेनाबाधितः कोऽसौ दोषः,
१० अविद्यैवेति चेत्, कथन्तर्ह्यविद्यानिवृत्तिः, न हि तन्निवृत्ता-
वपर्यवसितः कश्चिद्बाधो नाम, तन्निवृत्तावपि तन्मूलवास-
नास्तीति चेत्, सा किम्ब्रह्मवत्सत्यत्वात्तत्त्वज्ञानेनाबाधिता, उत
मिथ्यात्वेऽपि तदविषयत्वात्, न प्रथमः, द्वैतापसिद्धान्तादि
दोषप्रसङ्गात्, न च सा ब्रह्मस्वरूपानुप्रवेशिनी, भेदप्रतिभासा-
१५ नुवृत्तेरनिर्मोक्षप्रसङ्गात्, ब्रह्मणस्साध्यत्वादि(दोष)प्रसङ्गाच्च, न
चासत्याविद्योपात्ता वासना सत्येति सम्पद्यते, न चोपादान-

ध्वंसे कार्यानुवृत्तिमुन्मत्तोऽप्यनुसन्धत्ते; नापि द्वितीयः, वास-
नाया अपि श्रवणसमयसमधिगतब्रह्मव्यतिरेकलक्षणैकोपाधि
क्रोडीकारात्, अन्यथा त्वविद्याया अपि बाधकज्ञानाविषयत्व-
२० प्रसङ्गात्, "नेह नानास्ति" इत्यादेरविशेषात् तद्विषयत्वमिति
चेत् तुल्यम्, यदि च वाक्यार्थज्ञानाद्वासना न निवर्त्तते, कुत-
स्तर्हि तन्निवृत्तिः, न तावददृष्टादेः, तथा सति ज्ञानबाध्य-
त्वाभावेन सत्यत्वप्रसङ्गात्, अतएव न स्वतः, व्याघाताच्च, न
हि वध्यघातकयोस्तादात्म्यन्दृष्टम्, न च सहकार्यन्तरमन्त-
२५ रेण घटादिष्वपि स्वप्रध्वंसहेतुता, अहेतुकविनाशवादे तु
सौगत चार्वाकादिसौहार्दोद्गारप्रसङ्गः, अविद्यायाश्च तद्व-
देवाहेतुकनिवृत्त्यविरोधस्स्यात्, न च दावदहनान्त्यशब्द
चरमसंस्कारादिवदिति वाच्यम्, तत्रापि तत्तदवस्थान्तर
कालविशेषादिसामग्रीसहितपरमेश्वरसङ्कल्परूपस्य कारण-
३० स्यास्माभिरभ्युपगमात्, द्विचन्द्रादौ तु अङ्गुल्यवष्टम्भतिमि-
रादिदोषस्य चन्द्रैकत्वज्ञानाविषयत्वात्, तदुभयविषयैकज्ञा-
नोदयेऽपि पार्श्वस्थतारकाप्रकाशस्येव दोषप्रकाशांशस्य चन्द्रैक-
त्वप्रकाशेन विरोधाभावात्, दोषो मिथ्येति तु ज्ञानस्य
लौकिकानामनुदयात्, यौक्तिक(तन्नि)मिथ्यात्वज्ञानस्यैव
३५ भ्रान्तित्वेन तत्सत्यत्वाच्चाबाध इति तन्मूलभ्रमपरम्परानुवृत्ति-
र्घटते, तद्विषयान्यथात्वावसायेन भयविस्मयादिकार्यनिवृ-
त्तिश्च, तव तु न तथा, कारणभूताविद्यावत्कार्यभूत
शोकादिवच्च मध्यगतवासनाभेदज्ञानयोरप्येकहेतुत्वयैव निवर्त्य-

त्वात्, ' अनुवृत्तावपि बाध्यबाधकयोराविशिष्टत्वेन वास्तवप्रामा-
४० ण्याभावात् विशेषेण बाधकबलासम्भवाच्चेति ; तदेतत्सर्व-
मभिप्रेत्य "सत्यपि वाक्यार्थज्ञाने" इत्यादि "भयादिकार्यन्तु
निवर्तते" इत्यन्तम्भाषितम् .

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वे-
ङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्याम्
बाधितानुवृत्तिभङ्गवादः पञ्चमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।



श्रीमते निगमान्तमहादेशिकाय नमः ।

शतदूषण्यां

## विविदिषासाधनत्वभङ्गवादः षष्ठः ।



दृष्टानुश्रविकार्थजातविमुखात्पुंसोऽधिकृत्य श्रुतौ
यज्ञादिर्यदुपास्तिसाधनतया साक्षाद्विधिम्प्राप्नुते ।
लीलाभोगविभूतियुग्मभरितस्वात्मप्रदानोन्मुखः
श्रीमानस्तु शमे समस्तदुरितोत्ताराय नारायणः ॥

५ यदुच्यते "तमेतं वेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यत्र यज्ञादिकं विविदिषासाधनत्वेन विधीयते न तु वेदनसाधनत्वेन, वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनाच्च, **विविदिषन्ती**ति हि श्रूयते न पुनर्विदन्तीति, तत्र ब्रूमः, कोऽसौ वस्तुविरोध-

१० स्तावत्, किं ज्ञानस्य यज्ञादिभिः साधयितुमशक्यत्वम्, उत तेषां ज्ञानाङ्गभूतशमादिप्रत्यनीकात्मकत्वम्, यद्वा तत्त्वज्ञानफलापवर्गप्रत्यनीकत्रिवर्गसाधकत्वम्, यद्वा **आश्रमाङ्ग**तया विहितानां विद्याङ्गत्वे नित्यानित्यसंयोगविरोधः, अन्यो वा कश्चिदिति ; न प्रथमः, स हि यज्ञादिकमन्तरेण

१५ उत्पत्तिदर्शनाद्वा, यज्ञादिसंनिधावनुत्पत्तिदर्शनाद्वा, आद्ये त्वसिद्धिः प्राचीनेष्वर्वाचीनेषु वाऽधिकारिष्वननुष्ठित (शुद्ध)-

शाक्य(शुक्ल)धर्मेषु विद्योत्पत्तेरसिद्धत्वात्, द्वितीये त्वप्रयोजकता, सामग्र्यैव हि कार्योत्पत्तिः, न पुनर्हेतुमात्रात्, सम्भवति च प्रायशः कर्मकर्तृसाधनवैगुण्यम्, अन्यथा चित्राप‌शुफलत्वादावपि कस्ते समाश्वासः, तस्यास्तत्साधनत्वं विदधाति श्रुतिरिति चेत्, अत्रापि यदि श्रुतिर्विदधाति, तदा तद्वदेव समाश्वसिहि, अन्यथा विविदिषासाधनत्वेऽपि त्वया न समाश्वसितव्यम्, तत्रापि साध्यसाधनभावस्य श्रुत्येकावसेयत्वात्, "कुर्वद्रायमकुर्वद्र"त्यादि चार्वाकदुर्वादस्य त्वयाप्यस्मर्तव्यत्वात्, व्यभिचारस्य च समत्वात्, एतेन वाक्यजन्यप्रमितिरूपस्य संस्कारजन्यस्मृतिसन्ततिरूपस्य वा वेदनस्य किङ्कर्मापेक्षयेति निरस्तम्; इच्छाया अप्यनुकूलताबोधाधीनोत्पत्तेः किङ्कर्मापेक्षयेति समत्वात्, अन्तःकरणनैर्मल्यद्वारेणेति चेत्, तुल्यम्, यत्रोभयोस्समो दोष इत्यभियुक्तवचनं किमर्थमित्थं विस्मरसि, "कषाये कर्मभिः पक्वे ततो ज्ञानम्प्रवर्तते" इत्यादिवाचनिकार्थातिलङ्घनत्ववाधिकम्. नापि द्वितीयः, शमादेरविहिताप्रतिषिद्धनिषिद्ध-(काम्य)विषयत्वेन विद्याङ्गतया विहितेभ्यः कर्मभ्यो व्यतिरिक्तविषयत्वात्, विहितस्य च "धर्मेण पापमपनुदति" "कषायपक्तिः कर्माणि ज्ञानन्तु परमा गतिः" इत्यादिभिर्विद्योपकारकत्वस्यैव श्रुतत्वात्. न च तृतीयः, फलाभिसन्धिविरहादेव त्रिवर्गानारम्भात्, अनेकफलसाधनस्यापि ज्योतिष्टोमादेरभिसन्धिविशेषेण फलप्रतिनियमस्य सर्वैरभ्युपगन्तव्यत्वात्.

अत एव न चतुर्थः, त (अ)चापि विनियोगपृथक्त्वेन नित्या-
४० नित्यसंयोगविरोधाभावात्, तदेतत्सर्वं सूत्रकारैरेव विस्पष्ट-
मुक्तम् "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" "शमदमाद्यु-
पेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयं-
त्वात्" "विहितत्वाच्चाश्रमकर्मापि" "सहकारित्वेन च"
"अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" इत्यादिभिः.
४५ या च ते श्रुत्यक्षरपर्यालोचना सोऽपि हस्तसमालोचः,
"सोऽन्वेष्टव्यः सविजिज्ञासितव्यः," "तद्वि(द्वावि)जि-
ज्ञासितव्यम्", "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"
इत्यादिश्रुतिशीलापरामर्शात्, न हि तेषु सन्प्रत्ययार्थ-
विधिपरत्वम्भवतापि स्वीकृतम्, विधिबलावसितपुरुषार्थ-
५० साधनत्वार्थमिद्धेच्छानुवादरूपत्वात् प्रत्ययस्य. ध्यायीते-
त्यादिविध्यन्तरैकार्थ्यात्, तत्र शाब्दम्प्रत्ययार्थप्राधान्य-
(मुपेक्ष्य)मनादृत्येच्छाया इष्यमाणप्रधानत्वादार्थम्प्रकृत्यर्थप्रा-
धान्यं स्वीक्रियत इति, चेत्, तर्हि "क्रियावानेष ब्रह्म-
विदां वरिष्ठः, कर्मणैव हि संसिद्धिम्, कषाये कर्मभिः
५५ पक्वे ततो ज्ञानम्प्रवर्तते," इत्यादिप्रमाणसहस्रैकार्थ्याद्चापि
वेदनपरत्वमङ्गीकुरुष्व. लोके चासिना जिघांसति अश्वेन
जिगमिषति इत्यादिषु प्रकृत्यर्थे करणान्वयो बहुलमुपलभ्यते.
अत्रासेरश्वस्य वा हनन गमनेच्छासाधनत्वायोगात् हनना-
दिसाधनत्वस्यान्वयव्यतिरेकसिद्धत्वाच्च अगत्या प्रकृत्यर्थसाधन-
६० त्वाश्रयणम्, इह तु न तथा अन्तःकरणनैर्मल्यद्वारेण मुक्त-

वि(शुद्ध्याद्यु)द्देशोपकारकत्वस्य ज्ञान तदिच्छयोरविशेषादिति
चेन्न, **अनन्य**परत्वस्योपपादितत्वात्, **अयोगस्य** चाचाप्य-
विशेषात्; तथा हि योऽयं विविदिषाकामो यज्ञादिष्वधि-
करोति, स किन्तदानीं वेदनमिच्छति उत न, आद्ये
६५ विविदिषा सिद्धैवेति न तस्या यज्ञादिसाध्यत्वम्, **तथा च**
चक्रकम्, **वेदनेच्छाया**ज्ञातायामेव विविदिषेच्छा जायते,
तस्याञ्ज्ञातायाङ्कर्मानुष्ठानम्, ततो विविदिषेति. अत्रैकैको-
भयपर्वसङ्कोचेनात्माश्रयान्योऽन्याश्रयावप्यन्तर्भाव्यौ. द्वितीयेऽपि
वेदनस्यानिष्टत्वे विविदिषाप्यनिष्टैव स्यात्, **तद्विषयत्वा-**
७० त्तस्याः, **विविदिषा** हि वेदनं साधयेत्, तच्चापवर्गादिक-
मिति मत्वैव हि तस्यामभिलाषसम्भवः. ननु वेदनौन्मुख्य-
लक्षणविविदिषा पूर्वं संवृत्ता, **तदर्थ**प्रवृत्तिपर्यन्ता तु साध्य-
तयाभिमतेति चेन्न, तादृशतीव्रेच्छाया एव उत्पत्त्यनुत्पत्ति-
विकल्पे **प्रागुक्त**दोषानतिलङ्घनात्, न हि वेदने तीव्रेच्छाया-
७५ मसम्भवन्त्याम तादृशीमपि तामिच्छेत्, तदुपायवर्गानु-
ष्ठानक्लेशं वा सहेत; ननु दृष्टमेतत् यद्बुभुक्षापिपासादि-
कामनया भेषजमुपदिश्यते, तत्रापि भोजनादेरिष्टत्वानिष्टत्व-
विकल्पेन प्रागुक्त(दोष)प्रसङ्गो दुर्वारः, तत्र यः परिहारस्ते
समोऽत्रापि भविष्यतीति चेत्, तन्न, भोजनादेस्सामान्यतो-
८० ऽनुकूलत्वज्ञानादेवेष्टत्वसिद्धेः, **तथापि** दोषवशात्तदातन-
मनारोग्यात्मकस्यातिकूल्यमपनेतव्यमिति तावन्मात्रार्थभेषजो-
पदेशः, न पुनरिच्छास्वरूपनि(ष्प)त्तये. अथापि तर्हि

तथास्तु, सामान्यतो वेदनस्येष्टत्वेऽपि तादात्विकतत्प्राप्ति-
कृत्यापादकरजस्तमो निवर्हणेन अन्तःकरणशुद्ध्यर्थङ्कर्मणां
८५ विनियोग इति चेत्, तर्हि विविदिषासाधनत्वश्रुतिः परि-
त्यक्तैव. अवान्तरव्यापारत्वादविरोध इति चेत्, तर्हि
वेदनसाधनत्वमप्यनुमन्यताम्, तत्पूर्वभाविनस्सर्वस्यापि यज्ञा-
दिकर्मावान्तरव्यापारत्वोपपत्तेः. एवञ्च सति "क्रियावानेषं
ब्रह्मविदां वरिष्ठः," "कषाये कर्मभिः पक्के ततो ज्ञान-
९० प्रवर्तते।" "पुण्यप्रज्ञां वर्धयति क्रियमाणम्पुनःपुनः।"
इत्यादिभिरैकार्थ्यञ्च, अतो यज्ञादिकर्म वेदनसाधनमेव;
ननु विविदिषासाधनत्वे यच्चोद्यम् यज्ञादेस्तद्भक्तिसाधनत्वेऽपि
समानम्, तथा हि, किम्भगवतिभक्तिमान् भक्तिङ्कामयते,
उत तद्विधुरः, न प्रथमः, भक्तेर्निष्पन्नत्वेन साध्यत्वायोगात्,
९५ न द्वितीयः, भगवद्भक्तिविधुरस्य तद्भक्तावपि नैरपेक्ष्यात्,
भक्त्यवस्थाभेदात् निर्वाहेऽपि प्राग्वदेव दोष इति, तन्न,
प्रीतिरूपज्ञानविशेषो हि भक्तिः, प्रीतिश्च तारतम्यवती,"
विषयस्वभावविशेषाभिमानाभ्यासभेषजादिभिः प्रेमवृद्धिः
कामशास्त्रादिष्वपि सम्मता, पुरुषस्य तत्कामना सम्भवति
१०० न वेत्येतावदेव चिन्तनीयम्, तत्र यदि सञ्जातमात्रा-
दतिशयितस्य प्रेम्णः फलान्तरप्रमाणतस्सिध्येत्, तदा
तथाविधस्यातिशयमभिवाञ्छेदेव, न च तावता तथा-
विधस्यातिशयस्यापि निष्फलत्वप्रसङ्गः, ज्ञानवदुपपत्तेः,
सामान्यतोऽवगते हि विशेषतो ज्ञानाय व्याप्रियते,

१०५ **अन्यथा** जिज्ञासैव सर्वत्र न स्यात्. नन्वेवं **विविदिषायाम**प्येवमस्त्विति चेन्न, **विशेषेच्छाया** एव प्रागेवोदयात्, न हि पूर्वं सामान्यतो ज्ञानमिच्छति पश्चाद्विशेषत इति सम्भवति, **न च विषय**विशेषावच्छेदमन्तरेण इच्छाजातिविशेषः कश्चित्सम्भवति, **भक्तौ** तु भोग्याकाराविर्भावतारतम्यवशात् तारतम्यमुक्तम्, **इहापि** तत एव तारतम्यमिति चेत्, अस्तु तत्, तथापि **काम्यत्वन्दुर्वचम्**, **तथाविध**विषयविशेषितस्य वेदनस्य काम्यत्वमन्तरेण तदसिद्धेः, तत्काम्यतायास्तु सिद्धौ सिद्धा तथाविधवेदनेच्छेति कथं सा काम्या, **अतस्सिद्धं यज्ञादिकर्म** न विविदिषासाधनत्वेन विहितमिति ; तदेतत्सर्वमभिसन्धायाह, "एवं रूपाया ध्रुवानुस्मृतेस्साधनानि यज्ञादीनि कर्माणीति "यज्ञादिश्रुतेरश्ववदि"त्यभिधास्यते इति."

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां विविदिषा-

१२० साधनत्वभङ्गवादः षष्ठः ॥

---

श्रीमते निगमान्तमहादेशिकाय नमः।

शतदूषण्यां

# शब्दजन्यप्रत्यक्षभङ्गवादः सप्तमः।

विभूत्यंशे यस्य स्खलति जगतामच्चमखिलं
श्रुतिर्जात्यन्धानामुपदिशति यं रूपमिव नः।
निजाध्यचावेचाचुलकितसमस्तस्खयमसौ
हृषिकेशो दिव्यन्दिशतु मम चचुस्खविषयम्॥

५ यदूचिरे यद्यपि तत्त्वमस्यादिवाक्य(क्यार्थ)श्रवणसमयसम्भवम्परोक्षं ज्ञानमविद्यां न निवर्तयति, तथापि श्रवणादिभिर्निरस्तसमस्तभेदवासनामूलासम्भावनाविपरीतसम्भावनाख्य चित्तविक्षेपलक्षणप्रतिबन्धस्य तदेव वाक्यमविद्यानिवर्तकमपरोक्षं ज्ञानञ्जनयति, न च शब्दस्य कथमपरोक्षधीहेतुत्वमिति

१० वाच्यम्, इन्द्रियस्यापि कथमिति प्रसङ्गात्, दर्शनादिति चेत् तुल्यम्, क्वतद्दर्शनमिति चेत् "संवित्स्वप्रकाशा दृशमस्त्वमसी"-त्यादिषु, नह्यत्र संविद्विषयः स्वविषयो वा प्रकाशो नास्ति, सन्नपि वा परोक्षः, स्वधीविरोधात्, प्रत्यक्षे च विषये परोक्षप्रकाशव्याघातात्, अन्यथा शुक्तित्वप्रकाशेऽपि रजतावभासा-

१५ विरोधप्रसङ्गात्, नचायम्प्रकाश इन्द्रियजन्यः, वाक्यस्य तदानीमबोधकत्वप्रसङ्गात्, वाक्यमन्तरेणापि तत्प्रसङ्गाच्च, न च पुन-

तत्त्वाधिगमवच्छब्दसन्निनेन्द्रियजन्यः, अन्यतरेण तदुत्पत्त्यु-
पपत्तौ कल्पनागौरवात्, अन्वयव्यतिरेकाविशेषे सतीन्द्रियसह-
कृतशब्दजन्य इति विपरिवर्तप्रसङ्गाच्च, किन्नामेन्द्रियन्तत्स-
१० हकारिस्यादिति चेत्, मनसस्सर्वज्ञानकरण(स्य)साधारणसह-
कारित्वङ्किन्न जानासि, तथापि विनिगमनायाङ्को हेतुरिति
चेन्न, अन्धस्यान्धतमसि स्थितस्य वा वाक्यश्रवणादृशमोस्मीति
प्रत्यक्षप्रत्ययात्, न चात्रापरोक्षत्वमारोपितम्, बाधका-
भावात्, न च सम्प्लवे भेदाग्रहात्तद्व्यवहारः, कदाचिदपि
१५ तत्र धीभेदानुपलम्भात्, अतो वाक्यजातीयस्य क्वचित्प्रत्यक्ष-
ज्ञानजनकत्वसिद्धौ क्व विरोधावकाशः, अन्यदपि वाक्यं किन्न
जनयतीति चेन्न, गोजातीयत्वे शाक्वरः किन्न दुग्धे दुग्धमिति-
वदपहास्यत्वात्, अस्ति तत्रावान्तरोपाधिरिति चेत्, अस्त्व-
त्रापि कश्चित्, न च तदज्ञानन्तत्कार्योत्पत्तिप्रतिबन्धि,
२० तज्ज्ञानस्य तत्कारणत्वानभ्युपगमात्, अन्यथातिप्रसङ्गात्, यथाहुः
"न कारणपरिज्ञानन्तत्कार्योत्पत्तिकारणम्। न हि बीजाद्य-
विज्ञानमङ्कुरोत्पत्तिवारणम्॥" इति, न चास्यात्यन्ता-
ज्ञातता, स्वतोपरोक्षार्थगोचरत्वस्योपाधेरवधारणात्, न च
तत्त्वमस्यादिवाक्यस्य प्रत्यक्षज्ञानजनकत्वे किम्प्रमाणमिति
२५ वाच्यम्, निवर्त्यमिथ्यात्वान्यथानुपपत्त्यैवतत्सिद्धेः, स्वतश्शुद्धे-
ऽपि विश्वसाक्षिणि ब्रह्मणि स्फटिकमणिघटितदाडिमी-
कुसुमरागोपरागवदवभासमात्रसिद्धिरियमशुद्धिः, सा च
ज्ञानमात्रनिवर्त्येति "तरति शोकमात्मवित्" इत्यादि

श्रुतिशतसिद्धम्, मिथ्याभूतस्य च ज्ञानमात्रनिवर्त्यत्वं
४० युक्तम्, न च परोक्षज्ञानन्निवर्तकन्दृश्यते, अतः परिशेषादप-
रोक्षमेव ज्ञानन्निवर्तकमिति स्थिते न ताव(त्त)त्करणमिन्द्रियं,
बाह्येन्द्रियाणाम्प्रत्यक्पराङ्मुखत्वात्, मनसोऽपि सोऽहमस्मी-
त्यस्मिन्नर्थे स्वातन्त्र्येणाप्रवृत्तेः, शब्दसंस्कारादिपुरस्कारे तु
तस्यैव का(क)रणत्वोपपत्तेः, मनसश्च नित्यशुद्धबुद्धमुक्त-
४५ स्वभावब्रह्मगोचरसाक्षात्कारकरणत्वस्यादृष्टचरत्वेन शब्दस्य
तत्सहकारित्वकल्पनायोगात्, तथात्वे च श्रवणादिनैष्फल्यात्,
"न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन,
मनसैवेदमाप्तव्य"मित्यादिश्रुतीनाञ्च चित्तैकाग्र्यस्यान्तरङ्गत्व-
बोधने तात्पर्यात्, अत एव "अप्राप्यमनसासहे"त्यादेर-
५० नधिकृतमनो विषयत्वव्यवस्थापनानुपपत्तिः. न च मान-
सम्प्रत्यक्षमस्ति, आत्मनस्स्वयम्प्रकाशत्वात्, सुखादेस्तु साक्षि-
वेद्यत्वात्, भावनासहकृतमनो जन्यसाक्षात्कारस्यापि पथिक-
परिभावितप्रियतमासाक्षात्कारवद्भ्रान्तित्वात्, भ्रान्तिरूपसाक्षा-
त्कारस्यापि साक्षिरूपत्वेनैव मानसत्वाभावात्. अनुमानादे-
५५ स्त्वापरोक्ष्यविद्वेषशीलत्वात्, अतो वाक्यपरिशेषे तत्रापि
भेदगर्भाणां वाक्यानां भेदभ्रमनिवर्तकत्वायोगात् अद्वैत-
वाक्यान्येवाविद्यानिवर्तकापरोक्षज्ञानञ्जनयन्तीति. किञ्च
प्रत्यक्षस्य भेदभ्रमस्य परोक्षादैन्द्रियकप्रत्यक्षाद्वा न परिभवो
युक्तः; न्यूनत्वात्समत्वाच्च, शास्त्रमूलन्तु प्रत्यक्षं साक्षात्कारा-
६० विशेषेऽपि निर्दोषहेतुकत्वात्तद्बाधक्षमम्, तथोक्तम् "न्यूनत्वाच्च

समत्वाच्च परोक्षशाब्दजं ज्ञानम्। निर्दोषहेतुजन्यत्वात्प्रत्यक्षं शाब्दजं ज्ञानम्॥" इति, प्रत्यक्षभेदभ्रमनिवर्तन इति शेषः, साक्षात्कारस्य चाविद्यानिवर्तकत्वम्, तस्य च शब्दका(क)रणत्वं शब्दादेव सिध्यति "निचाय्य तं मृत्युमुखात्

६५ प्रमुच्यते, क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर" इत्यादे(दिभि)रपरोक्षज्ञानस्याऽविद्यानिवर्तकत्वसिद्धेः. "तस्मै मृदितकषायाय तमसः परन्दर्शयति भगवान्सनत्कुमारः, वेदान्तविज्ञानसुनिश्चितार्थाः, स्वाध्यायश्चक्षुरुत एकमस्य योगो द्वितीयमभिवीक्षणाय। अध्ययनमनननयनोऽस्य द्रष्टा

७० न मांसचक्षुरभिवीक्षते तम्॥ पितृदेवमनुष्याणां वेदश्चक्षुस्सनातन"मित्यादिभिस्तस्य शब्दका(क)रणकत्वसिद्धिः. प्रयोगश्च, विगीतं ज्ञानं साक्षात्कारि, तत्त्वमस्यादिवाक्यजन्यज्ञानत्वात्, तत्स्वरूपगोचरश्रावणज्ञानवत्, न च तत्तदजन्यम्, प्रत्यक्षे विषयस्यापि कारणत्वस्वीकारात्, तत्रैव प्रतिज्ञाया-

७५ मपरोक्षविषयत्वात् सुखादिज्ञानवदिति वा प्रयोगः, तत्त्वमस्यादिवाक्यं वा स्वप्रतिपाद्यगोचरसाक्षात्कारजनकं, स्वप्रकाशार्थोपदेशरूपत्वात्, स्वतोऽपरोक्षार्थविषयत्वाद्वा, संवित्स्वप्रकाशेत्यादिवाक्यवत्, अपरोक्षत्वन्तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्ति, अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्व-

८० वदिति, न चात्र परोक्षत्वम् तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्ति, परोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववदिति (सत्प्रतिपक्ष) सप्रतिसाधनता सिद्धसाधनात्, तेषामेव

हि वाक्यानामसम्भावनाविपरीतभावनाप्रतिबद्धेष्वेतस्मिं पुरुषे
परोक्षज्ञानजनकत्वमिष्यते, पूर्वोक्तश्रुतिविरुद्धतया कात्वा-
८५ त्ययापदेशाच्च, न च वाच्यमग्निहोत्रादिवाक्यजन्यज्ञानेष्व-
प्येवम्प्रयोक्तुं शक्यमित्याभास समानयोगक्षेमतेति, तत्र विपक्षे
बाधविरहात्, न हि तत्र प्रामाण्यस्यानुपपत्तिः, अनुमानादि-
वदुपपत्तेः, नाप्यनुष्ठानस्य, परोक्षनिश्चयादपि तदुपपत्तेः;
नापि फलस्य, तत एव तत्सिद्धेः, नापि फलकामनायाः
९० फलसम्बन्धनिश्चयादेव तस्या अप्युपपत्तेः, अत एव पुरुष-
प्रवृत्तिरपि सङ्गच्छते, इह तु प्रागुक्तार्थापत्तिरेव विपक्षे
बाधिका स्यात्, अतो नाभासतुल्यतेति, एवम्पूर्वेष्वपि प्रयो-
गेष्वाभासतुल्यतोद्धारो द्रष्टव्यः, अतो विपक्षबाध(क)स्यैव
प्रतिबन्धरक्षकत्वादुक्तार्थे महाविद्यादिजातयश्च यथावगाह-
९५ प्रयोक्तव्याः, स्वपरपक्षसाधारण्यं हि महाविद्यानां
स्वभावः, तत्रानुकूलतर्कसदसद्भावाभ्यामेकत्रार्थसिद्धिरितर-
त्रार्थासिद्धिरिति निर्णयः. ननु तर्कपराहता इमे हेतवः,
शब्दस्य प्रत्यक्षान्तर्भावप्रसङ्गादिति चेन्न, अप्रसङ्गात्,
योगिमनसो बाह्यविषयप्रत्यक्षज्ञानजनकत्वेऽपि बाह्यप्रत्यक्ष-
१०० बहिर्भाववदुपपत्तेः, अथ चक्षुरादिपञ्चकान्यतमत्वं योगि-
मनोऽन्यत्वे सति बाह्यविषयापरोक्षप्रमितिकारणत्वं वा
बाह्यप्रत्यक्षान्तर्भावे प्रयोजकमिष्येत, इहापि तर्हि स्वतो
परोक्षब्रह्मात्मविषयशब्दान्यत्वे सत्यपरोक्षप्रमितिकरणत्व-
प्रत्यक्षान्तर्भावप्रयोजकमिति समस्समाधिः, किञ्च प्रत्य-

१०५ र्यान्तर्भाव इति इन्द्रियान्तर्भावो वा साक्षात्कारजनक-
वर्गान्तर्भावो वा विवक्षितस्स्यात्, पूर्वत्र तु मनसोऽपि
बाह्यान्तर्भाव इतिवदुपलम्भविरोधादशक्यं (क्यः) वक्तुम्,
उत्तरत्र लिष्टप्रसङ्गता, ऐकाश्र्येऽसिद्धे मत्यवान्तर-
भेदाश्रयणाविरोधात्, तदेव तु कथमिति चेन्न, दश-
११० मस्त्वमसीत्यादौ तद्दर्शनस्य समर्थितत्वात्, वाक्यस्यैवा-
परोक्षधीजनकत्वे मननिदिध्यासनविध्यानर्थक्यं श्रुत-
वेदान्तानां संसारानुवृत्तिदर्शनविरोधश्चेति चेन्न, प्रागुक्त-
प्रतिबन्धनिरासद्वारेण तयोश्श्रवणम्प्रति फलोपकार्यङ्गतया
विधानोपपत्तेः, संसारिलोप(पत्ते,लब्धेस्स प्रतिबन्धकवत्पु-
११५ रुषविषयत्वात्, अतो बाधकापेतसानुग्राहकश्रुत्यादि-
सिद्धन्तत्त्वमस्यादेः साक्षात्कारजनकत्वमिति .

अत्र ब्रूमः, यत्तावदुक्तङ्केषु चिद्वाक्येष्वपरोक्षधीहेतुत्व-
न्दृश्यत इति तत्खरविषाणाङ्कुरप्रसाधने खरविषाणाङ्कुर-
निदर्शनमिति मन्यामहे, तथा हि, संवित्स्वप्रकाशेत्यत्र
१२० तावत् सामान्यतस्स्वपरसमवेतत्रैकालिकसर्वसंवित्स्वप्रकाशत्वं
वाक्यार्थः, 'तादात्विकी तु तज्जन्या॰ संविदेका तदानीं
स्वप्रकाशा, तत्र न सर्वसंविदां स्वप्रकाशत्वमिदानीमपरोक्षम्,
यतो वाक्यस्य तदापरोक्ष्यहेतुता स्यात्, न च सर्वसंविदैक्यम्,
तस्य दूषयिष्यमाणत्वात्, तदैक्येऽपि तत्तदुपहिताकारेण
१२५ परोक्षापरोक्षविभागस्य दुरपह्नवत्वात्, वाक्यजन्यसंवित्स्व-
रूपापरोक्ष्ये तावद्वाक्यमेव कारणम्, विषयप्रकाशांशकारण-

व्यतिरेकेण स्वप्रकाशांशे कारणान्तरानुपलम्भादिति चेत्,
तर्हि सिद्धमनुमानादेर्वाक्यान्तराणामप्यपरोक्षधीजनकत्वम्,
तत्तज्जन्यधियामपि स्वप्रकाशांशेऽपि तत्तत्करणकत्वात्,
१३० सत्यम्, तथापि संवित्स्वप्रकाशेत्यादिवाक्येषु विषयप्रका-
शांशः स्वप्रकाशांशश्चैक एवेति विशेष इति चेन्न,
सामान्यविशेषविषयतया तद्भेदस्य दर्शितत्वात्. एवन्दशमः
त्वमसीत्यत्रापि यदि दशमत्वं स्वात्मनः पश्यत एवेदं
वाक्यमप्रयुक्तम्, तदा घटम्पश्यतोऽयङ्घट इतिवत्सिद्धानु-
१३५ वादपरमिदं वाक्यं स्यात्, तथा च प्रत्यक्षानुवादितामात्रेण
प्रत्यक्षताभ्रमः, परोक्षविषय इवापरोक्षविषयप्रयोगेऽपि
तच्छक्तेस्तदवस्थत्वात्, यदा पुनरविदितस्वात्मदशमत्वम्प्रत्यु-
च्यते, तदा दशमत्वांशे परोक्षत्वं स्पष्टम्, उद्देशां(श्यां)शस्य
तु प्रागेव दृष्टत्वाद्विशिष्टेऽपि प्रत्यक्षताभ्रमः प्रतिपत्ति-
१४० झाटित्यात्, न च तत्प्रत्यक्षत्वेनैव विशिष्टस्य प्रत्यक्षता,
अयम्पर्वतोऽग्निमानित्यनुमानेऽपि तत्प्रसङ्गात्, गुरुत्वादेर-
तीन्द्रियत्वभङ्गप्रसङ्गाच्च, एवं क्षत्रियस्त्वमसीत्यादिष्वपि
विकल्प्यानुसन्धेयम्, यत्तु प्रत्यक्षे विषये परोक्षप्रकाश-
व्याघात इति तदप्यसत्, आपरोक्ष्यादेर्ज्ञानधर्मत्वे ज्ञान-
१४५ व्यक्तिभेदेन विषयैक्येऽपि परोक्षत्वापरोक्षत्वयोर्विरोधा-
भावात्, विषयधर्मत्वेऽपीन्द्रियेण तथाविधं ज्ञानञ्जायतां,
लिङ्गशब्दादिना त्वन्यथाभूतमिति पुरुषभेद इवैकस्मिन्
पुरुषेऽपि (का)करणभेदेन कालभेदेन चैकस्यैव वस्तुनः

प्रत्यक्षतापरोक्षता च प्रागेव दर्शिता, विपरीतवासना-
१५० भूयस्त्वेऽपि करणशक्त्या तत्त्वज्ञानोदयस्योपपादनात्, यदि
प्रत्यक्षविषये परोक्षप्रकाशस्स्यात्तदा शुक्तित्वप्रकाशेऽपि
रजतांशमायाविरोधप्रसङ्ग इति चेत्, किं शुक्तौ चक्षु-
र्व्यापारान्वयव्यतिरेकानुविधायी रजतभ्रमः परोक्षः, येनैव-
मब्रवीषि, अथ पुनर्भ्रान्तिरेव प्रसञ्जनीया, तदा शुक्ति-
१५५ त्वादिलक्षणविशेषग्रहस्य भ्रमोत्पत्तिप्रतिपक्षतया वा
विशेषाग्रहाख्यसहकारिविरहेण सामग्रीवैकल्याद्वा शुक्तौ
रजतभ्रमानुदयः, दूरत्वप्रतिबन्धपरोक्षज्ञानसामग्रीसिद्धौ
कथन्तदनुत्पत्तिः, तथाविधा च तत्सामग्रीप्रागेव दर्शिता,
अङ्गीक्रियते च भवतापि श्रवणदशायाम्, अत एवैवं-
१६० विधप्रसङ्गस्य निर्मूलता, किञ्च स्वानिष्टं प्रसञ्जकम्परानिष्ट-
म्प्रसञ्जनीयमिति तु तर्कतत्त्वव्यवस्था, उक्तञ्च श्रीपुण्डरी-
काक्षाचार्यैः,

"प्रसञ्जकन्तु स्वानिष्टम्परानिष्टम्प्रसज्यते ।
विपर्यये पराभीष्टं स्वाभीष्टे पर्यवस्यति ॥
१६५ प्रसञ्जके तु स्वाभीष्टे स्वानिष्टे पर्यवस्यति ।
स्वाभीष्टस्य त्वसिद्धिस्स्यात् परेष्टस्य प्रसञ्जने" ॥ इति,

उभयमप्यत्र विपरीतम्, स्वतः प्रत्यक्षेऽपि ब्रह्मणि
श्रवणदशायां वाक्यतः परोक्षज्ञानस्य भवदभिमतत्वात्,
मिथ्यैतदिति चेत् पश्चात्तनप्रत्यक्षज्ञानजननमपि तथैवेति
१७० को विशेषः, शुक्तौ रजतत्वस्येवाविरोधापादकस्य मिथ्यात्व-

मिह स्मर्तुमर्हसि, "सत्यं विरोधाच्छुक्तित्वबाधकत्वेन कथ्यते। मिथ्याभूतञ्च रजतत्वाबाध्यत्वेनाभिधीयते॥" तेन मिथ्यैतदिति वचनस्यावाविरोधापादकत्व भवति, प्रसञ्ज-नीयस्य कस्यचिदस्मदिष्टमाप्तोपदेशादिभिः शुक्तित्वप्रकाशेऽपि
१७५ दुष्टेन्द्रियादिनाकस्यचित्कस्यचिद्रजतावभासानुवृत्तेः, अन्यथा भवताम्बाधितानुवृत्तेर्दृष्टान्तस्याप्यभावप्रसङ्गात्, तथा प्रत्यक्ष-सिद्धेऽपि शुक्तेस्तत्त्वे भ्रान्तविप्रलम्भकवाक्यादे(दिभि)रपि रजतधीरुदेत्येव,सा च परोक्षैव, शीघ्रन्तु बाध्यमानतया केषाञ्चित्तत्र तदनुत्पत्तिभ्रमः. किञ्च यदि प्रत्यक्षे विषये
१८० परोक्षप्रकाशो व्याहतः, तदा पर्वतोऽग्निमानित्यादिषु विशेषतोदृष्टानुमानेषु तथा विप्रार्थगोचरवाक्येषु च परोक्षप्रकाशो न स्यात्, योग्यतामात्रन्तु तत्र न तु तदा-नीम्प्रत्यक्षतेति चेन्न, यस्य कस्यचिदारण्यकयोगीश्वरादेस्त-द्दर्शनात्, तथापि नानुमातुस्तथेति चेत्तर्ह्यत्रापि दशम-
१८५ स्यादेर्वाक्यश्रवणात्पूर्वमदर्शनान्न वाक्यतः साक्षात्कारसम्भवः,
यत्पुनः स्वस्यैव द्रष्टुं योग्यतया अनन्तरदर्शनाद्वा तत्र तत्सम्भव दृष्येत, तर्हि सिद्धमनुमानादावपि तदुभयसम्भ-वात्तथात्वम्, यदा चायमष्ट इति मन्यमानस्यैव कश्चिदयमष्ट इति ब्रूयात्, तदा तस्यापि प्रत्यक्षार्थविष-
१९० यत्वाविशेषात् साक्षात्कारजनकत्वप्रसङ्गः, दृष्यत एवेदमिति चेन्न, स्वतोपरोक्षार्थविषयत्वादिति हेतुविशेषणस्यायु-क्तत्वात्तदसिद्धेः, दृष्यतां वा, तथापि ज्योतिष्टोमादि-

वाक्यार्थस्यापि योगिप्रभृतीनामप्रत्यक्षत्वस्याऽत्वयोरविगीत-
त्वात्तान्प्रति केनचिदविदितमाहात्म्येन तत्प्रयोगे ततस्सा-
१९५ क्षात्कारसम्भवस्यात्, तथा च सर्वमपि वाक्यङ्कस्यचित्सा-
क्षात्कारंकरणमिति स्थितौ, केषाञ्चिदेवेति व्यवस्थाभङ्गः,
अस्त्वेवमपि किन्नश्छिन्नमिति चेन्न, अनुमानादिष्वपि
तत्प्रसङ्गस्योक्तत्वात्, तथा च तत्त्वमस्यादिवाक्ये परिशेषा-
सिद्धेः, ततश्चापशूद्रादिनयविरोधप्रसङ्गात्, किञ्च विश्व-
२०० स्यापि ज्ञाततया अज्ञाततया वा साक्षिवेद्यत्वस्य भवदभि-
मतत्वात्सर्वैः प्रमाणैस्साक्षात्कारसम्भवः सुलभ एव, यदि
चात्र स्वतोपरोक्षार्थविषयमेव वाक्यं तज्जनकमिति
व्यवस्थाप्येत, तदा दशमस्त्वमसीत्यादिदृष्टान्तासिद्धिः,
यद्यपि त्वमंशस्य स्वतोपरोक्षता, तत्रापि संख्यादि-
२०५ विशिष्टाकारेण स्वतोपरोक्षत्वाभावात्, अन्यथा वाक्य-
श्रवणात्पूर्वमेव तद्वैशिष्ट्यप्रकाशप्रसङ्गात्, अतोऽनुमानस्येव
वाक्यजातीयस्य क्वचिदपि साक्षात्कारहेतुत्वदर्शनस्यासिद्धेः
अनुग्राहकतर्काभावाच्च स्वाभिमतस्य कस्यचिद्वाक्यस्य
तद्धेतुत्वकल्पनं विरुद्धमेव, अत एव स्वतोपरोक्षार्थ-
२१० गोचरत्वोपाधिरपि निरस्तः. यत्तु निवर्त्यमिथ्यात्वान्य-
थानुपपत्त्या पारम्पर्येणापरोक्ष्यतज्जनकविशेषयोः परि-
शेष इति तदप्यन्यथासिद्ध्यसिद्धिभ्यामाक्रम्यते, सत्य-
मेव हि संसारसुपासनप्रीणितेश्वरसङ्कल्पविशेषनिवर्त्यं
साधयिष्यामः, यत्तु "तरति शोकमात्मवि"दित्यादिभि-

२१५ ज्ञानमात्रनिवर्त्यत्वं सिद्धमिति, एतदपि वेदगज्ञानादि-
शब्दानामुपासनाख्यविशेषपर्यवसानस्य प्रागेव दर्शितत्वान्निर-
स्तम्, यथाहुः "वेदनंध्यानविश्रान्तन्ध्यानं श्रान्तं ध्रुवस्मृतौ ।
सा च दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति ॥" इति, मिथ्या-
भूतस्य च ज्ञानमात्रनिवर्त्त्यत्वं युक्तमित्येतच्च मिथ्याभूततया
२२० भवदभिमतस्य तिमिरादिदोषस्य प्रतिभटादेश्च भेषज-
शस्त्रादिनिवर्त्यत्वोदाहरणेन प्रागेव दत्तोत्तरम्, अस्तु च
मिथ्यात्वे धीबाध्यत्वयुक्तिः, न चात्र मिथ्यात्वम्, "दृश्यत्वाद्यदि
मिथ्यात्वम्प्रपञ्चस्याभिधीयते । ब्रह्मणोपि च मिथ्यात्वन्तत
एवाभिधास्यते ॥ ब्रह्मणो यदि दृश्यत्वं व्यावहारिक-
२२५ मुच्यते । प्रपञ्चस्यापि दृश्यत्वन्तात्त्विकङ्किन्नवेष्यते" ॥ अपि
च संसारमिथ्यात्वेपि किन्निवृत्तिशब्देन प्रतिभासमान-
मिथ्यार्थप्रध्वंसनमभिप्रेत्य तदर्थमपरोक्षधीगवेषणमुत तद्वि-
षयज्ञानप्रध्वंसमाहोस्वित्तत्कारणोच्छेदं वा अथ तथाविध-
ज्ञानान्तरानुत्पादमुत तद्विपरीतविषयावगाहनरूपविषया-
२३० पहारं यद्वा तद्विषयसत्यताध्यवसायशैथिल्यमथान्यदेव
किञ्चिदसांव्यवहारिकमिति, नाद्यः, क्वचिदपि मिथ्यार्थस्य
प्रध्वंसाभावात्, "प्रध्वंसो हि स्वरूपस्य प्रच्युतिः प्रतिपाद्यते ।
स्वरूपसत्यताभावे कस्य प्रच्युतिरुच्यते" ॥ सत्यपि तस्मिं-
स्तेन तदुच्छेदायोगात्, अन्यथा बाधकज्ञानात् पूर्वं सुप्ते
२३५ द्रष्टरि पुरुषे शुक्तिरजताद्यवस्थितिप्रसङ्गात् संविदधीन-
सत्ताकस्य तस्य तन्निवृत्तिरेव हि निवृत्तिः, आहुश्च,

"आरोपस्य निवृत्तिस्स्यादारोप्यस्यापि सङ्क्षयः। तस्य स्वरूपशून्यस्य का निवृत्तिर्हि कथ्यते" ॥ न द्वितीयः, तस्य बाधकज्ञानाभावेपि बाधकज्ञानवदेव स्वरसवाहिविनाश-
२४० हेतुत्वादेवाशुतरविनाशित्वात्, अन्यथाऽनुदितबाधक-ज्ञानस्य भ्रान्तस्य सुषुप्त्याद्यभावप्रसङ्गात्, तदप्याहुः, "न भ्रान्तिर्बाधकज्ञानान्नियमेन विनश्यति। न स्याद्धिभ्रान्त-चित्तस्य सुषुप्तौ भ्रान्तिसङ्क्षयः" ॥ इति, यद्यप्युत्तरज्ञान-मात्रमपि संस्कारादिवत् पूर्वज्ञाननिवर्तकमिष्यते, तथापि
२४५ यत्किञ्चिदविरुद्धविषयात्परोक्षज्ञानादपि पूर्वज्ञाननिवृत्त्यु-पपत्तौ विरुद्धविषयप्रत्यक्षज्ञानान्वेषणन्निष्फलम्, न तृतीयः, भ्रान्तिज्ञानकारणानुच्छेदे यथाऽवस्थितप्रत्यक्षज्ञानानुदयात्, न ह्यङ्गुल्यवष्टम्भतिमिरादिदोषेष्वनुवर्तमानेषु चन्द्रैकत्व-साक्षात्कारसम्भवः, सम्भवेवा किन्तदुच्छेदेन, प्रत्यक्षानु-
२५० वृत्त्यर्थन्तदुच्छेद इति चेन्न, तत्सामग्र्यनुवृत्तिमन्तरेण तदुच्छेदेपि तदसिद्धेः, तस्याश्चानुवर्तमानायान्तदवस्थानेपि विरोधाभावात्, स्वाभाविकप्रत्यक्षप्रतिबन्धकतया तदुच्छेद-नमिति चेत्, किमत्र स्वाभाविकत्वम्; किं सामग्र्यां सत्यां स्वरसवाहित्वमुत नित्यस्वाभाविकत्वम्, आद्ये प्रागपि
२५५ कथन्तदवस्थाने प्रत्यक्षोदयः, न द्वितीयः, अन्योऽन्याश्रय-णात्, नित्यस्वाभाविकप्रत्यक्षस्य च किन्नाम प्रतिबन्धकत्वम्, अयमत्र सङ्ग्रहः, "भ्रान्तिकारणसद्भावे प्रत्यक्षस्य ह्यसम्भवः। सम्भवे निष्फलैव स्यात् तदुच्छेदस्य कल्पना ॥ नानुवृत्त्यर्थ-

मुच्छेदः सामग्र्यैवानुवर्तनात् । प्रतिबन्धनिवृत्त्यर्थमुच्छेदे
२६० प्रथमङ्कथम् ॥ प्रत्यक्षं कारणोच्छेदे तदुच्छेदस्ततोपि
चेत् । अन्योन्याश्रयणन्तु स्यात् प्रतिबन्धो नचात्मनी"ति ॥
नापि चतुर्थः, प्रागभावस्यासाध्यत्वात्, तदनुवर्तनस्याप्यन्त-
तस्तत्प्रतियोगिकारणोच्छेदकोटिनिक्षेपात्, तस्य च निरस्त-
त्वात्, न पञ्चमषष्ठौ, परोक्षज्ञानादपि तत्सिद्धेः, प्रत्यक्षमपि
२६५ हि द्वि चन्द्रादिज्ञानमनुवर्तमानमपि परोक्षेण चन्द्रैकत्वानु-
मानादिना बाध्यते, तावतैव चन्द्रद्वित्वाध्यवसायशैथिल्य-
मायते, अन्यथा देहात्मभ्रमवतामनुमानेनागमेनवा देहाति-
रिक्तात्मविस्रम्भो न स्यात्, परोक्षबाधेपि भ्रमोऽनुवर्तत इति
चेत् न, तुल्यमेतदित्युक्तत्वात्, "सञ्जातेऽप्यपरोक्षेपि बाधे
२७० कारणसम्भवात् । अङ्गुल्याद्यैर्भवेद्भ्रान्तिरुपष्टम्भनहेतुभिः" ॥
नापि सप्तमः, तस्यासांव्यवहारिकत्वेनैतदर्थोपायोपदेशा-
योगात्, अन्वयव्यतिरेकागोचरत्वेनापरोक्षपक्षपातविरहाच्च,
एवं सामान्येनापरोक्षज्ञानानपेक्षायाङ्कुतस्तत्कारणविशेष-
चिन्तेत्यनुत्थानमेव शब्दजन्यप्रत्यक्षवादस्येत्यभिप्रेत्य भाष्य-
२७५ कारैरिह न संरम्भः कृतः, "सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनु-
पपत्ते"रित्यादिना"द्रष्टव्य" इत्यादेर्दर्शनसमानाकारविधि-
परत्वोक्तिश्चेदमपि दूषितममं(मत)स्त, समन्वयाधिकरण पूर्व-
पक्षे तु परोक्षैव दूषयिष्यति "न च शब्द एव प्रत्यक्षज्ञान-
ञ्जनयतीति वक्तुं युक्तम्, तस्यानिन्द्रियत्वा"दित्यादिना,
२८० अस्तु वा कथञ्चिदापरोक्ष्यपरिशेषः, तथापि प्रत्यक्परा-

ङ्मुखत्वादिलक्षणविरुद्धव्याप्त्(प्ते)प्यैन्द्रियादिपरित्यागे वाक्य-
स्यापि तुल्यन्यायतया परित्यागप्रसङ्गः, दर्शनादर्शनाभ्यां
विशेष इति चेन्न, तदसिद्धेः, तत्सन्देहेपि न विरुद्ध-
व्याप्तिरिति चेन्न, इन्द्रियादिष्वपि प्रसङ्गात्, अथ सत्यामेव
२८५ विरुद्धव्याप्तौ गत्यन्तराभावात्तदनादरेण वाक्यस्यापरोक्षधी-
हेतुत्वङ्कल्प्येत, हन्त तर्हि इन्द्रियादिष्वेव भक्तिरियमप्र-
युज्यताम्, तथा च सिद्धे गत्यन्तरे किं वा वाक्येन, अयन्तु
निर्णयः, "विरुद्धव्याप्तिसद्भावे वाक्यस्यापि तथा भवेत् ।
असद्भावो यदि भवेत् सम एव द्वयोरपि ॥ दशमस्त्वमसी-
२९० त्यादौ भवेद्वाक्यात्परोक्षधीः । सामग्र्युत्थापनात् पश्चा-
त्प्रत्यक्षादपरोक्षधीः" ॥ न च प्रत्यक्षादेरद्वैतगोचरत्वविरोधः,
तेषामपि त्वदभिमतकूटयुक्तिभिस्तत्त्वमस्यादेरिवाद्वैत-
गोचरत्वस्थापनस्य शक्यत्वात्, यच्च प्रत्यक्षस्य न परोक्षात्परि-
भव इति तदपि ज्वालैक्यबाधकभेदानुमानादिनिदर्शनेन
२९५ निरस्तमेव, यदप्यैन्द्रियकप्रत्यक्षाच्छास्त्रजन्यप्रत्यक्षस्य प्राबल्य-
मुक्तम्, तदप्यसत्, एकदोष प्रसूतत्वादेर्दर्शयिष्यमाणत्वात्,
"प्रत्यक्षं ब्रह्म गृह्णाति यदि चेत् ब्रह्मदृश्यता । अब्रह्मा-
लम्बनत्वे तु कथन्नु बलवत्तरम्" ॥ यत्पुनरपरोक्षज्ञानस्य
मोक्षहेतुत्वं श्रुतिसिद्धमिति, तावन्मात्रस्याभ्युपगमेपि न नः
३०० काचित् क्षतिः, यत्तु शब्दादेव शब्दस्यापरोक्षधीहेतुत्वन्दर्शितं,
तदपि हास्यम्, अन्यपरत्वस्याऽकुमारं प्रसिद्धेः, साक्षात्कार-
हेतोर्मनसः सहायतया वा दृढव्यवसायहेतुतामात्रेण वा

तदुपपत्तेः, यथाश्रुतग्रहणे च चक्षुष्ट्वादेरपि स्वीकर्तव्यत्वात्, "श्रुतिस्मृती तु विप्राणाञ्चयने द्वे" इति हि श्रूयते, "वेदान्त-
२०५ विज्ञानसुनिश्चितार्थाः" इत्यादिषु परोक्षव्यवसायमात्रमे-
वोच्यते, यत्तु विज्ञानमिति विशेषणेन विशेषविषयत्वसिद्धा
निश्चयहेतुत्वे सिद्धेऽपि सुशब्देन विशेषणादपरोक्षनिश्चयहेतुत्वं
सिद्धमिति, तदप्यत्यन्तपरिहास्यम्, अकम्पनीयव्यवसायविव-
क्षया सुशब्दप्रयोगात्, यः पुनस्तत्त्वमस्यादिवाक्यजन्यज्ञान-
२१० त्वादिति प्रयोगः, स तज्जन्य आवरणज्ञानेनैवानैकान्तिकः,
अतिप्रसङ्गश्च, वाक्यान्तरेष्वपि प्रयोक्तुं शक्यत्वात्, परिहारस्य
च समत्वात्, विषयजन्येषु च व्याप्तेस्सङ्कोचात्, न वाक्य-
जन्यता हेतुः, प्रत्यक्षत्वेतु किम्पुनरर्थजन्यत्वमेव स्यात्, तत-
स्सोपाधिकस्त्वयम्, वाक्यविषयप्रत्यक्षेऽपि वाक्यस्यैवार्थत्वात्
२१५ अर्थजन्यत्वोपाधेः साध्यव्यापकत्वाविरोधः, यस्तु स्वप्रकाशा-
र्थोपदेशरूपत्वात् स्वतः प्रत्यक्षार्थविषयत्वादिति, सोऽपि पूर्वव-
देवानेकान्तः, दृष्टान्तस्य च साध्यविकलत्वन्दर्शितमेवेति.
प्रतिप्रयोगस्तु, विगीतं वाक्यम् स्वार्थविषयप्रत्यक्षज्ञानजन-
कम्, वाक्यत्वात्, ज्योतिष्टोमादिवाक्यवत्, तथा विगीता
२२० धीर्न स्वविषये प्रत्यक्षा, वाक्यजन्यत्वे सति वाक्येतरविषय-
त्वात्, स्वर्गयागादिसम्बन्धबुद्धिवत्, नचात्र श्रुतिविरुद्धतया
कालात्ययापदेशः, श्रुतेरन्यपरत्वस्थापनात्, न च दशम-
स्त्वमसीत्यादिवाक्येन तज्जन्यज्ञानेन चानैकान्तिकता, तत्र
साक्षात्कारप्रसङ्गस्यापि निषिद्धत्वात्, न च पूर्वैरेव हेतुभि-

२२१ स्मृतिसाधनता, उपलम्भानुरोधेनानतिप्रसङ्गकव्याप्ति-
मूलकतया प्रबलत्वात्, समत्वेपि प्रकरणसमत्वापादनदशा-
यामन्योन्यप्रतिरोधस्येष्टत्वेन तत्प्रसङ्गानुपपत्तेश्च, न च विपक्षे
बाध(क)विरहादप्रयोजकता, अविशेषात् शब्दान्तराणा-
मपि प्रत्यक्षज्ञानजनकत्वप्रसङ्गस्य सत्त्वात्, नचाप्रत्यक्षार्थ-
२३० विषयतया तेषान्तदनुत्पादकत्वमिति वाच्यम्, तथाऽप्ययमष्टः
दशमोऽयमित्यादिवाक्यानान्तत्प्रसङ्गात्, नचेह भवताऽपि
शब्दस्य साक्षात्कारहेतुत्वमिष्यते, दृश्यतां वा, तथापि
ज्योतिष्टोमादिवाक्यानान्तत्प्रसङ्गोदुर्वारः, तत्रापि मनस्सह-
कृतशब्देनैव प्रत्यक्षज्ञानञ्जायत इति साहसस्य सुशकत्वात्,
२३५ तावतैव च तेषाम्प्रत्यक्षविषयत्वस्यापि सिद्धेरवान्तरविशेषा-
निर्धारणादिति, अस्तु वा विपक्षे बाधकाभावः, स तु
पूर्वेषामपि समान इति, तथापि प्रतिरोधमात्रं सिद्धम्,
नन्वस्ति पूर्वेषां विपक्षे बाधकमात्मविज्ञानस्य मोक्षसाधनत्व-
श्रुत्यन्यथाऽनुपपत्तिः, तथा हि, श्रुत्युपपत्तिभ्यां वाक्यार्थ-
२४० ज्ञानादेव मिथ्याभूतसंसारनिवृत्तिरिति स्थिते प्रत्यक्षस्य
भ्रमस्य परोक्षंबाध्यत्वायोगेन प्रत्यक्षपरिशेषे ब्रह्मणि च
सकलकरणागोचरेऽनुमानादिषु च साक्षात्कारवैदेशिकेषु
यदि वाक्यादप्यपरोक्षज्ञानन्न स्यादपवर्गोपि न स्यादेवेति,
इदमपि दण्डघातसूदितदर्वीकरनर्तनम्, अस्याः परिपाटि-
२४५ कायाः आरम्भ एव निरस्तत्वादिति. यः पुनरसावप्यूहः
अपरोक्षत्वन्तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्ति, अपरोक्षज्ञान-

निष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववदिति, अत्र ताव-
द्वाक्यस्वरूपजन्यतद्विषयश्रावणसाक्षात्कारेण सिद्धसाधनता,
प्रत्यक्षज्ञानहेताविन्द्रियार्थसन्निकर्षेऽर्थस्येन्द्रियस्य च तुल्यकक्ष्य-
२५० त्वात्, अथ पुनस्तत्त्वमस्यादिवाक्यजन्यतदर्थविषयज्ञानवृ-
त्तीति साध्यं विशेष्येत, तथापि परोक्षतद्वाक्यार्थानुभव-
संस्कारसहकृतश्रवणजन्यतदर्थप्रतिपादकत्वविशिष्टवाक्यस्वरूप-
साक्षात्कारेण सिद्धसाधनतैव, स हि प्रत्यभिज्ञात्मा विशे-
षणतयाऽर्थं विशेष्यतया वाक्यं च विषयीकरोति, अथ
२५५ तदेकविषयज्ञानवृत्तीति विशेषयसि, तथापि ब्रह्मेतर-
विषयत्वेन धर्मेण हेतोरनैकान्तिकता, तत् खलु सम्प्रति-
पन्नेष्वपरोक्षेषु सर्वेष्वपि वर्त्तते, न पुनस्संशयत्वविपर्ययत्व-
चाक्षुषत्वादिवत् कुतश्चिदपरोक्षान्निवर्त्तते, तत्त्वमस्यादि-
वाक्यजन्यज्ञाने तु नैव वर्तते, तत्त्वमस्यादिवाक्यव्यतिरिक्त-
२६० अन्योपि ब्रह्मसाक्षात्कारोस्तीति चेत्, हन्त तर्हि वाक्यैक-
परिशेषप्रयासं विस्मृतवानसि, तथा च सति वाक्यजन्य-
साक्षात्कारकल्पनावैयर्थ्यञ्च, तत एव तत्कार्यसिद्धेः,
यत्तु परोक्षवत्तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्तीति प्रत्यनुमाने
सिद्धसाधनत्वमुक्तम्, तत्र यदि तत्त्वमस्यादिवाक्यजन्यज्ञाना-
२६५ भिव्यापीति प्रयुञ्जीत, तदा किमब्रूयाः, श्रुतिविरोधात्का-
लात्ययापदेशमेव ब्रूम इति यदि, हन्ताद्यापि त्वया
श्रुतितपस्विनी कूटसाक्षिणी कल्प्येत, सा तु यथार्थवादिनी
न किञ्चित्त्वदभिमतम् ब्रवीति, यत्त्वपरोक्षत्वं ज्योतिष्टो-

मादिवाक्यजन्यज्ञानदृष्टीति प्रतिबन्ध्यनुमाने विपक्ष
२७० बाधकाभावाद्वैषम्यमुक्तम्, तदत्रापि समानमेव, अर्थापत्तेः
कल्पकासिद्ध्यादिनिरस्तत्वात्, परोक्षादपि ज्ञानात्प्रत्यक्षो-
पमर्दादिः प्रागेव प्रसाधितत्वात्, प्रत्यक्षापेक्षायामपि तत्त्व-
मस्यादिवाक्यव्यतिरिक्तजन्येनापि प्रत्यक्षेण बाधोपपत्ताव-
न्यथासिद्धेः, अस्ति च योगिप्रत्यक्षमदृष्टविशेषसहकृतान्तः-
२७५ करणजन्यमागमसमधिगम्यमास्तिकानाम्, श्रूयते हि
श्रीरामायणे, "रहस्यञ्च प्रकाशञ्च यद्वृत्तन्तस्य धीमतः ।
तत्सर्वन्धर्मवीर्येण यथावत्सम्प्रपश्यति ॥" इति, यत्तु भाष्ये
दर्शनसमानाकारत्वमुच्यते तन्मोक्षसाधनभूताया ध्रुवानु-
स्मृतेरेव, न पुनर्धर्मवीर्यफलभूतयोगिप्रत्यक्षन्निषिध्यते,
२८० तस्यापि श्रुतत्वात्, त्वदभिमतस्य तु श्रुतत्वप्रतिक्षिप्तमिति
तस्यैवासम्भवः, यद्यपि योगिप्रत्यक्षम्फलमात्रमित्यस्मन्मतम्,
तथापि तदधीनायाःपरिशेषासिद्धेः अन्यथासिद्धेश्च उपन्यासो
नानुपपन्नः "क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रहः ।"
इति न्यायात्, यदि च यत्किञ्चिद्विपक्षे बाधकमित्यभि-
मानमात्रेण परिगृह्यानुमिनोषि, तदा ज्योतिष्टोमादि-
२८५ वाक्येपि भवादृशः कोपि तथा तदभिमत्याऽनुमिनुयादेव,
एवं सिद्धसाधनत्वानैकान्तिकत्वातिप्रसञ्जकत्वाऽभाससमान-
योगक्षेमत्वान्यथासिद्धत्वादिदोषदूषितत्वादनुमानविशेषोत्प्रे-
क्षणमेव निपुणधियां सिषाधयिषितस्याप्रामाणिकत्वानु-
मितिमन्तर्गतां सूचयति, अत एवास्मिन्नर्थे महाविद्यादिप्रयो-

श्रीमते मध्वाचार्याय नमः ।

## शतदूषणीव्याख्याने चण्डमारुते

# शास्त्रभेदभङ्गो नाम तृतीयस्कन्धः ।

---

**व्यन्ता इति,** सौहार्दमित्यनेन एकशास्त्रत्वमेकग्रन्थत्व-
ञ्चोच्यते; एकार्थत्वलक्षणसम्बन्धस्य विवक्षितत्वाच्छास्त्रभेदापादक-
विरोधाभावोऽपि दर्शितः. सौहार्दं समधिश्रिताः यज्ञजना-
न्मुक्तिमाङ्करित्यनेन अङ्गप्रधानप्रतिपादकत्वेन पूर्वोत्तरभागयो-

५ स्संबन्धो व्यज्यते. एवमैक्ये हेतुमाह **व्यन्ता** इति, उत्तरभाग-
त्वात्पूर्वभागेणैक्यं युक्तमिति भावः. अनेन व्याख्येयैक्यात्
व्याख्यानभूतमीमांसयोरैक्यं सूचितम्, मुक्तिमित्यनेन विरुद्ध-
फलत्वान्नैकशास्त्र्यमित्येतत्परिहृतम्. अनन्तशब्देन वस्तुपरि-
च्छेदमुखेनान्तर्यामित्वाभिधानात् सर्वकर्मणान्तदाराधनात्मक-

१० तया उपासनाङ्गत्वसंभवस्सूच्यते. एकव्याख्येयव्याख्यानात्मना
विंशतिलक्षणमेकं शास्त्रमित्यैकग्रन्थ्यपर्यन्तैकशास्त्र्यं प्रतिज्ञास्यन्
तत्रैकग्रन्थव्याख्यानत्वेपि एकैकदेशव्याचिख्यासया प्रवृत्तयो-
रेकग्रन्थत्वादर्शनादिहापि मीमांसाद्वयस्य तथैवकरणान्नैकग्रन्थ्यं
युक्तमित्याशङ्क्य विचारस्य "स्वाध्यायोऽध्येतव्य" इति विध्यधीनत्व-

१५ पक्षे तद्विधिबलात्सामान्येन स्वाध्यायार्थविचारः कर्तव्य इत्येव बुद्धिरुत्पद्यते, रागप्रयुक्तिपक्षेऽपि कृत्स्नस्यापि स्वाध्यायस्याधीतत्वात्तदुक्तरीत्यैव बुद्धिरुत्पद्यते, अतः कृत्स्नगोचरविचारः प्रथमङ्कर्तव्यतया प्रतिपन्नः, न तु पूर्वभागविचारः कर्तव्यः उत्तरभागविचारः कर्तव्य इत्येवं रूपाबुद्धिः प्रथमत उत्पद्यते,
२० अतो विचारकर्तव्यताबुद्धिमत्पुरुषानुजिघृक्षया प्र(युक्तं)वृत्तं विचारशास्त्रं प्राथमिकस्वारसिकबुद्धिमनुसृत्य सामान्येन वेदार्थविचारोद्देशेन प्रवृत्तमिति वक्तुं युक्तमिति पूर्वोत्तरमीमांसयोरैकशास्त्र्यमुचितमित्यभिप्रायेण विचारस्य कृत्स्नविषयत्वं साधयति **स्थितन्तावदि**त्यादिना, अध्ययनस्य कृत्स्न-
२५ विषयत्वं विचारस्य कृत्स्नविषयतासाधनार्थम्. नन्वध्ययनस्य कृत्स्नस्वाध्यायविषयता न युक्ता, स्वविधिप्रयुक्तौ "वेदानां किञ्चिदधीत्य ब्राह्मण" इत्येकदेशाध्ययनप्रतीतेः, अत एव न तद्विध्यधीनविचारोऽपि कृत्स्नविषयः; परविधिप्रयुक्तौ च कृत्स्नवेदाध्यापनासम्भवात् स्वाध्यायपदाभावेनाध्यापनस्य तन्मा-
३० त्रविषयत्वासम्भवाच्च किञ्चिदध्यापनमात्रेणाचार्यकसिद्धेः न तत्प्रयुक्तमध्ययनं कृत्स्नविषयमित्यत्राह **अध्ययन**विधिनाध्यापनविधिना वेति, स्वविधिपयुक्तौ स्वाध्यायशब्दस्य कृत्स्नविषयत्वात् कृत्स्नस्वाध्यायाध्ययनसिद्धिः, "वेदाना"मित्यस्य संज्ञापरत्वात् न सङ्कोचकत्वम्; अध्यापनविधिप्रयुक्तिपक्षेऽप्यध्यापन-
३५ विधिना अध्ययनविधिसिद्धस्य व्रतनियमविशेषयुक्तस्य कृत्स्नविषयस्यैवाध्ययनस्य स्वाङ्गभूतोपनयनद्वारतया स्वीकारादध्या-

पनविधिः कृत्स्नस्वाध्यायाध्ययनं प्रयुङ्क्त इति न तन्मुखेनाध्ययनसङ्कोचावकाश इति भावः. तयोः — विधिरागयोः. नन्विति, अध्ययनविधिर्यदार्थज्ञानपर्यन्तः तदा तत्प्रयुक्त-
४० विचारस्सर्वत्रसिध्यति, रागप्रयुक्तौ तु विचारः तत्साध्यनिर्णयो वा नस्वतः पुरुषार्थः, अपि तु पुरुषार्थसाधनतया, अतो यस्य यत्पुरुषार्थरागसम्भवः तस्य तदुपयोगिविचार एवेच्छा स्यादिति विचारसङ्कोचमर्हतीति भावः. त्रिवर्गापवर्गयोः परस्परविरोधादेकस्योभयत्ररागासम्भवमाशङ्क्याह क्रमे-
४५ णेति, उभयभावनाः-कर्मब्रह्मोभयभावनाः चतुर्मुखादयः. यस्य त्विति, यद्यपि सर्वे सर्वपुरुषार्थरागयोग्याः, तथापि तत्तत्कर्मानुरोधात् कस्यचित्क्वचिदेवेच्छाजायते, अत एतदीयप्राथमिकरागानुसारेण विशेषोद्देशेनैव मीमांसाशास्त्रं प्रवर्त्तेतेति भावः. यस्येति, द्विवर्गः—अर्थकामौ, वेदोदितेषु-वेदप्रति-
५० पन्नसाधनकेषु, तथाच तादृशपुरुषानुरोधे कर्तव्ये मीमांसायाः प्रवृत्तिरेव न स्यादिति भावः. तुल्यमिति, उभयार्थानुसारेणैव प्रवृत्तावेकैकाधिकृतपुरुषानुग्रहस्यापि सम्भवादुभयार्थानुसारेण .मीमांसायाः सामान्योद्देशेनैव प्रवृत्तिरुचितेति भावः. एवञ्चतुर्ष्वपि पुरुषार्थेषु रागसम्भवात्तदर्थं कृत्स्नवेदा-
५५ र्थजिज्ञासायां तदनुसारेण सामान्योद्देशेन प्रवृत्तिरुपपादिता, इदानीं कृत्स्नवेदार्थजिज्ञासायां हेत्वन्तरमाह तिष्ठत्विति, रागात्कर्ममात्रे विचारसङ्कोच इति पक्षे दूषणं सूचयन्नेव कर्ममात्रे विचारसङ्कोचप्रकारान्तरेणाशङ्क्यपरिहरति कर्ममात्र

इति, कबन्धमीमांसकस्त्विति तुशब्देन रागात्मकत्वोपयन्
६० प्रथमपक्षदूषणेनैन निरस्त इति सूचयति. शङ्काचेत्थम्, न ब्रह्मणो विचारस्सम्भवति, सिद्धे व्युत्पत्त्यभावेन वेदान्तानां परिनिष्पन्नब्रह्मबोधनाशक्तेः, तत्त्वेऽपि प्रवृत्तिनिवृत्त्यविषयस्य ब्रह्मणः प्रतिपादने प्रयोजनाभावात् उपासनविधिशेषत्वे चार्थवादत्वेन स्वार्थविवक्षाविरहाच्च वेदान्तानां तत्र प्रामाण्या-
६५ भावादिति. **राहुमीमांसकैरिति,** ऐकशास्त्र्यसमर्थनार्थमप्रयतमानैरपीति भावः. प्रत्युक्तिप्रकारमाह **सिद्धेपी**त्यादिना. **अप्राप्त** इति, अर्थज्ञानस्य स्वतन्त्रत्वे इत्येतत्पूर्वेण सम्बध्यते, अर्थज्ञानस्य स्वतन्त्रत्वपक्षे स्वविषयप्रवृत्तिहेतुत्वाभावेऽपि पूर्वाप्राप्तनिरतिशयपुरुषार्थप्रतिपादनमुखेन तदुपयोगिश्रवणादौ
७० प्रवृत्तिहेतुतया पुरुषार्थपर्यवसानादित्यर्थः. **उपायानुष्ठानेति,** रात्रिसत्रविध्यपेक्षितफलरूपप्रतिष्ठादिवदुपासनविध्यपेक्षित ब्रह्मरूपविषयबाधोऽपि न युज्यत इत्यर्थः; वयमप्येवमेव प्रतिब्रूम इति भावः; इति—प्रतिवक्तव्य इत्यन्वयः. यद्वा **राहुमीमांसकैरिति,** अतस्तैरियं शङ्काकार्येति भावः. कबन्धमीमां-
७५ सकैरेव तथाशङ्कायां भवद्भिः कथं प्रत्युच्यत इत्याशङ्कायां प्रत्युक्तिप्रकारमाह **सिद्धेपी**त्यादिना अयोगाच्चेतीत्यन्तेन. **स्वत** इति, प्रवृत्तिनिवृत्त्यविषयत्वेऽपि स्वतो निरतिशयपुरुषार्थस्य स्वेनापि लब्धुं योग्यत्वेनानुसंहितस्य श्रवणप्रीतिश्च युज्यत एवेति न प्रयोजनाभावः. ननु यदि श्रवणादैक
८० प्रीत्यर्थं ब्रह्मबोधनं तदा बालोपच्छन्दनादिधात्रीवदयथार्थ-

त्वेऽपि प्रीतिसम्भवाच्च तस्य ब्रह्मणि प्रामाण्यम्, अतः
प्रामाण्यलाभार्थमुपासनानुष्ठानशेषतया कार्ये प्रामाण्यं
वाच्यम्, तथाचारोपितेनाप्युपासनसिद्धेर्न ब्रह्मणि वेदा-
न्तानां प्रामाण्यमित्यत्राह अर्थज्ञानस्येति, स्वातन्त्र्यमुपायां-
८५ नुष्ठानमनपेक्ष्यप्रयोजनपर्यवसानम्. तदुपयोगीति, तच्छ-
ब्देन स्वातन्त्र्योपायानुष्ठाने विवक्षिते, अयम्भावः, बाला-
द्युपच्छन्दनादावप्यर्थतथात्वज्ञानादेव प्रीतिः, न चात्रापि
तादृग्भ्रमादेव प्रीतिः, बाधकाभावेनौत्सर्गिक प्रामाण्य-
त्यागायोगात्, वाक्यान्तरेण तत्राप्युपायविधानाच्च; उपा-
९० यानुष्ठानशेषत्वपक्षेऽप्युपासनापेक्षितफलसमर्पकतया प्रामा-
ण्यम्, स्वर्गाद्यर्थवादवत्, विषयसमर्पकतयापि प्रामाण्यं,
वाग्धेनुत्वादिवच्च बाधकाभावात्, "तस्मिन्यदन्त"रिति
सिद्धवदनुवादात्, "ततो मान्तत्त्वतो ज्ञात्वा", "विदुः
कृष्णं ब्राह्मणास्तत्त्वतोये" इत्यादिना तत्त्वज्ञानस्यैव मोक्ष-
९५ हेतुत्वश्रवणाच्च; स्वातन्त्र्यपक्षे तत्प्रेप्सापूर्वकतत्साधनप्रवृत्त्या-
दिमुखेनापि पुरुषार्थपर्यवसानन्द्रष्टव्यम्, अत्र च स्वातन्त्र्य-
पक्षे प्रत्यक्षादौ पशुधनादिस्वरूपप्रतिपाद्य पर्यवसिते तत्प्रेप्सोः
"चित्रयायजेत पशुकामः" इत्यादिना तत्साधनविधानवत्
ब्रह्मपरवाक्ये ब्रह्मस्वरूपप्रतिपाद्य पर्यवसिते तत्प्रेप्सोरुपा-
१०० सनादिविधानमित्येकः प्रकारः; अस्मिन्पक्षे वाक्यभेदः.
यद्वा "तपांसि सर्वाणि च यद्वदन्ती"ति सर्वस्य तपश्शब्द-
विवक्षितस्य वेदान्तस्य ब्रह्मपरत्वावगमात् "तन्त्वौपनिषद्"-

मिति च तथावगमात् सर्वजगत्कारणत्वसर्वान्तर्यामित्व-
सर्वशेषित्वसर्वफलप्रदत्वसर्वकर्माराध्यत्वसकलविद्याप्रसाद्यत्वमु-
१०५ क्तप्राप्यत्वनिरतिशयानन्दत्वादिविशिष्टब्रह्मस्वरूपप्रतिपाद्यम्,
अत्राप्येतादृश ब्रह्मप्रतिपादनेन प्रीत्यर्थतया पुरुषार्थपर्यव-
सानेऽपि ब्रह्मस्वरूपप्रतिपादने उपसर्जनतया प्रसक्तोपाया-
नुष्ठानेनापि पुरुषार्थपर्यवसानमित्यपरः प्रकारः; अत्र च
न वाक्यभेदः. उपायानुष्ठान शेषत्वे तु उपायविध्यपेक्षित-
११० विषयफलार्पकतया उपसर्जनतया ब्रह्मप्रतिपादनम्; अत्रापि
न वाक्यभेद इति. प्रसङ्गात्कर्ममीमांसकैकदेशिनापि नेयं
शङ्काकार्येत्याह **कर्मशेषेति**. **अन्यत** इति, शास्त्रैक-
देशादन्यत इत्यर्थः. **तेनैवेति,** अतस्तन्निरासोपि नास्मा-
कमेव भर इति भावः. **अस्त्विति,** तथा च चतुर्ष्वपि
११५ पुरुषार्थेषु रागसम्भवादिति परिहारोऽसङ्गत इति भावः.
**तत्सहकारीति,** व्युत्पत्त्यादिकं विवक्षितम्. **तत्रापीति,**
कर्मभाग इव ब्रह्मभागेपि व्युत्पत्त्यादिसहकारिसिद्धेरित्यर्थः.
**तत्रैवेति**-त्रय्यन्तभागे, तथा च ब्रह्मणिविचारं सङ्कोचयतः
तवाभिमता ब्रह्ममीमांसापि न स्यादित्यपि हृदयम्. न
१२० चायमिष्टप्रसङ्ग इत्याह **तथात्वेवेति**—अन्यत्रापि सर्पमारे.
**तत्सिद्धावपीति,** व्युत्पत्त्यादिसहकारि सिद्धावपीत्यर्थः, तथा
च सत्पथवर्त्यनुग्रहाय ब्रह्मविचारार्थमेव शास्त्रप्रवृत्तिर्युक्ता,
यद्यप्यन्येऽप्यनुग्राह्याः, तथापि दुर्वासनादार्ढ्यात् केषाञ्चित्क-
र्मण्येव जिज्ञासा, तदभावात् "स्थितेरविन्द" इति न्यायम

१२५ केषाञ्चिद्ब्रह्मण्येव जिज्ञासेति, नैकस्योभयजिज्ञासासम्भव इति न सामान्यतो जिज्ञासानुरोधेन शास्त्रप्रवृत्तिरिति भावः. **त्वयापीति**, सत्पथवर्त्त्यनुग्रहेऽपि कर्माधिकार्यनुग्रहाय कर्म-मीमांसापि कार्येति भावः. **तथापीति**, सत्पथत्वस्वीकारेऽपि विविदिषार्थकर्मणामेव सत्पथत्वम्, तानि च यज्ञा-

१३० दिकर्माणि प्रसिद्धयज्ञादिभ्योभिन्नानि, मासाग्निहोत्रवत्, तद्विषयविचारस्य विविदिषार्थत्वादिचिन्तैव, तथा च, तद्विचारः सत्पथत्वेन स्वीकृतकर्मविचारः शारीरकशेषत्वात्तत्रैव क्रियते, जैमिनीय(कर्म)विचारस्य प्रसिद्धकर्मविषयः, तेषा-त्वापथत्वात्तद्विचारोऽपि तथेति न तेनैकशास्त्र्यमित्यर्थः.

१३५ **कर्मस्वरूपेति**, विविदिषार्थकर्मणामन्येषाञ्च मासाग्निहोत्र-नैयमिकाग्निहोत्रवद्भेदोवास्तु, नित्यकाम्यज्योतिष्टोमवद्विनि-योगपृथक्त्वमात्रं वास्तु, सर्वथापि कर्मस्वरूपविचाराभावेऽनुष्ठानानुपपत्तेः विविदिषार्थविनियोगो न युक्तः, वैयर्थ्य-प्रसङ्गात्, अतोऽवश्यापेक्षितः कर्मविचार इति तेनैक-

१४० शास्त्र्यमित्यर्थः. भवद्भिर्विविदिषार्थत्वानङ्गीकारात् भवत्पक्षे कथन्तच्छेषतयैकशास्त्र्यमित्यत्राह **वेदनेति**, विविदिषार्थत्वे हि कर्ममीमांसाकथञ्चिद्ब्रह्मजिज्ञासोपयोगिनी, वेदनार्थत्वे त्वङ्गविषयत्वात् अङ्गिशास्त्रेण सुतरामभिन्नेति भावः. **भवान्तरीयेति**, तथा च तत्र ब्रह्ममात्रेविचारसङ्कोचस्स-

१४५ म्भवतीति भावः, मृदितकषायस्येत्यनेन "कषायेकर्मभिः पक्वे" इति स्मृत्यनुसारात् प्रतिबन्धकपापापनोदनेनकर्मणां

विविदिषार्थत्वं यज्ञादिवाक्ये विवक्षितमिति सूचितम्.
**जातीति,** जन्मान्तरसुकृतविशेषाज्जातिस्मरणधर्मव्याधादिकं
यथा सिध्यति, तथा ज्ञानमपि येषां सिद्धम् "स्वयमागतवि-
१५० ज्ञाना" इत्यादिप्रमाणानुसारात्तान् प्रत्यनुपयोगात् ब्रह्ममी-
मांसापि व्यर्थत्वनारम्भस्यादित्यर्थः. तदर्हस्य-ब्रह्मजिज्ञासोः.
**उभयार्हस्येति,** कृत्स्नवेदार्थजिज्ञासोः कृत्स्नविचारारम्भः.
कर्मविचारापेक्षानियमाभावोनैकशास्त्र्यभङ्गकः, तथा सति
जन्मान्तरीयसुकृतवशादेदप्रामाण्ये सुदृढविश्वासपुरुषस्य प्रमा-
१५५ णलक्षणस्यानपेक्षितत्वात्तस्याप्युत्तरलक्षणैरेकशास्त्र्यं न स्या-
दिति भावः. ननु उभयार्हम्प्रतिकृत्स्नविचारारम्भोऽयमिति
कुतः, एकैकार्हम्प्रत्येकैकारम्भ इति कुतो नस्यादित्यत आह **न-**
**हीति,** विचारो हि विधिप्रयुक्तोवास्यात् रागप्रयुक्तोवा स्यात्
तत्राध्ययनविधेरर्थज्ञानकामाधिकारकत्वपक्षे विचारस्याध्य-
१६० यनविधिनाक्षेपाद्विधिप्रयुक्तता, स चाध्ययनविधिः कृत्स्नार्थ-
ज्ञानकामाधिकारकः, तत्तद्वाक्यार्थज्ञानकामनायास्तत्तद्वा-
क्याध्ययनाधिकारत्वे कृत्स्नाध्ययननियमानुपपत्तेः, तथा च
तद्विधिमूलविचारोपि तादृशाधिकारिविषयक एव; अतो
नेकैकमात्रजिज्ञासुं प्रति विधिः प्रवर्त्तकः, तस्यानधिकारिणं
१६५ प्रत्यप्रवर्तकत्वात्; रागप्रयुक्तिपक्षेपि साङ्गाध्ययनविधेः कृत्स्न-
गोचरतया तदधीनापातप्रतीत्युत्थापितरागोपि कृत्स्नार्थ-
ज्ञानगोचरोयुक्त इति विध्यधीनस्तदुपायविचाररागः कृत्स्नार्थ-
ज्ञानकामम्प्रत्येवप्रवर्तकः, विधिवदेव तस्याप्यनधिकारिणम्प्रत्य-

प्रवर्तकत्वात्, अत्र च फलसङ्गोऽधिकारस्थानीयः, तथा
१७० चोपायरागस्त्वस्मिन्नधिकारिस्थानीयम्फलार्थिनमेव प्रवर्त-
यति विधिवदित्यर्थः. **न हीति,** अप्रकनीयार्थविधायकत्वं
यथा वेदस्य न सम्भवति, तथाऽनधिकारिप्रवर्तकत्वमपि
विधिरागयोर्नसम्भवतीत्यर्थः. एवं विविदिषार्थत्वपक्षे ब्रह्म-
मात्रविचारसङ्कोचम्पुरुषविशेषेभ्युपगम्य तदन्यपुरुषविषयतया
१७५ कृत्स्नविचारारम्भस्समर्थितः, वस्तुतस्तु सत्कर्मणां ज्ञानार्थत्वे
विविदिषार्थत्वे वा ब्रह्ममात्रे विचारसङ्कोचः क्वापि पुरुषे न
सम्भवतीत्याह **यदा चेति.** यद्यपि वेदनार्थत्वे तदुपचयार्थ-
ङ्कर्मापेक्षा, विविदिषार्थत्वे तु कथम्, उत्पन्नायास्तस्या-
स्स्वयमेवानुवृत्तेः विविदिषायामुपचयाभिवृद्धेस्सेत्यत्राह **न**
१८० **चेति,** हेत्वभावादिति भावः. निश्चये प्रतिबन्धसद्भावा-
दपि न निश्चयसम्भव इति हेत्वन्तरोपन्यासपूर्वकन्निश्चया-
शक्यतामुपसंहरन् तत्फलितङ्कर्मणां सङ्ग्राह्यत्वमाह **प्राक्त-
नैरिति,** प्रतिबन्धशङ्कयेत्यनन्तरमुक्तनिश्चयाभावेनेति
शेषः,,सङ्ग्राह्यत्वादिति पञ्चम्या विचारोऽवश्यम्भावीत्यध्याहृत-
१८५ पदेनान्वयः.. कस्यचिदुक्तनिश्चयसम्भवेऽपि कर्मापेक्षामुपपाद-
यति **न चेति,** ततस्तत्र विचारसङ्कोच इति भावः.
आत्मनिवर्णाश्रमादेरभावात्तदभिमाननिबन्धन एव विधिः,
स चाभिमानोविविदिषायाः प्रागेव नित्यानित्यविवेक-
बलान्निवृत्त इति तन्निबन्धनविधिरपि तदानीन्निवृत्त
१९० इति. जन्मान्तरकर्मबलसिद्ध विविदिषस्य तदर्थङ्कर्म-

विचारापेक्षाया अभावात् ब्रह्ममात्रे विचारसङ्कोच इत्या-
शयेन शङ्कते **वर्णाश्रमेति. तद्धर्मस्येति,** तत्स्वरूपा-
ध्यासस्येत्यर्थः. **किं वा देहात्मेति,** वर्णाश्रमशब्देन तद्वि-
शिष्टो देहः अभिमानशब्देन तादात्म्याभिमानश्च विवक्षितुं
१९५ शक्यत इति भावः. **पिण्डस्यैवेति,** अभिमानशब्देन
धर्माध्यासः, तस्य च वर्णाश्रमशब्देन देहपरेण कर्मधारयो
विवक्षितुं शक्य इति भावः. **असिद्धेरिति,** मोक्षदशाया-
मेव तदध्यासनिवृत्तेरिति भावः. **तत्सम्बन्धस्येति,**
देहसम्बन्धस्याप्रातिभासिकत्वेन तज्ज्ञानस्य प्रातिभासिक-
२०० भ्रमत्वासिद्धेस्तस्य मोक्षात् प्रागनिवृत्तेरित्यर्थः. **यावतेति,**
श्रवणविधिरपि त्रैवर्णिकाद्यधिकारिकः, तथाचानिवृत्ताभि-
मानेषु कर्मविचारस्सम्भवति, ब्रह्मविचारस्तु नित्यानित्य-
विवेकाधिकारकत्वान्निवृत्ताभिमानस्यैवेति स कुत्रापि न
स्यादिति भावः. एवं विचारसङ्कोचाभावात्कृत्स्न वेदार्थ-
२०५ निर्णयोद्देशेन शास्त्रप्रवृत्त्यौचित्यात् ऐकशास्त्र्यमिति
स्थितम्, तत्र विचारशास्त्रयोस्तथापि परस्पराकाङ्क्षाविर-
हात्कथमेकग्रन्थ्यपर्यन्तैकशास्त्र्यमिति चोदयति **नन्विति,**
यद्यपि विद्यायाङ्कर्मणामुपयोग उक्तः तथापि विचारयोः
परस्परमुपयोगानुक्तेराकाङ्क्षाविरहान्नैकशास्त्र्यमित्याक्षेपो
२१० युक्तः. **न्यायेत्यादि,** उपयोग इत्यनुषङ्गः. **बाह्येति,**
बाह्यहेतु समुत्थाप्रामाण्यं प्रथमपादे निराक्रियते, आन्तरहेतु-
समुत्थाप्रामाण्यन्त्रिपाद्याम्. **कृत्स्नेति,** पूर्वोत्तरभाग-

विचारात्मके कृत्स्नशास्त्रे उपयुक्तम्. भेदेति, "सर्ववेदान्त-
प्रत्ययंचोदनाद्यविशेषा" दित्यत्रतावत् "एकं वा संयोग-
२१५ रूपचोदनाख्याऽविशेषा" दिति शाखान्तराधिकरणन्याय-
व्युत्पादनमुपजीव्यते, नचेदमेव तद्व्युत्पादनंमिति वाच्यम्,
चोदनाद्यविशेषादित्यादिशब्दस्य संयोगरूपचोदनाख्या-
ऽविशेषादिति पाठापेक्षत्वात्, एकमिति साध्यानिर्देशस्य
तन्न्यायोपजीवनेन तत्साध्यत्वाभादेव. तथा "गुणस्यापूर्वसंयोगे
२२० वाक्ययोस्तुल्यत्वा"दित्यधिकरणव्युत्पादितोगुणभेदः "नवा
प्रकरणभेदात् परोवरीयस्त्वादिव"दिति छान्दोग्य-
बृहदारण्यकोद्गीथविद्ययोर्भेदार्थमुपजीव्यते, तथा "नाना
शब्दादिभेदा"दित्यत्र शब्दान्तराभ्यासादिभिः भेदव्युत्पाद-
नोपजीवनमादिशब्दात्प्रतीयते. तार्तीया इति, "श्रुत्या
२२५ दिबलीयस्त्वाच्च नबाधः" "लिङ्गभूयस्त्वात्तद्धिबलीय-
स्तदपी"त्यादिना तार्तीयन्यायानामेवोपजीवनमिति गम्यते.
प्रयुक्तिश्चेति, "विहितत्वाच्चाश्रमकर्मापी"त्यधिकरणेन
विद्याङ्गत्वाश्रमाङ्गत्वनिर्णयं कृते चातुर्थन्यायेन प्रयुक्तिस्सिध्य-
तीत्यर्थः. गतिचिन्तायामिति, "वायुमब्दादविशेष-
२३० विशेषाभ्या"-मित्यधिकरणे, पाञ्चमिकन्याय उपजीव्यते,
तथा हि, कौषीतकिनः "स एतन्देवयानम्पन्थानमापद्याग्नि-
लोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं
स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक"मित्यग्नि-
लोकादनन्तरं वायुलोकमधीयते, वाजसनेयिनस्तु "यदा

२३५ वैपुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीर्षते यथा रथचक्रस्य खन्तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती"त्यादित्यात्पूर्वं वायुमधीयते, तत्र कौषीतकिनाम्पाठक्रमेणाग्निलोकशब्दोक्तादर्चिषः परत्वेन वायुः प्राप्तः, उक्तवाजसनेयश्रौतक्रमेण पाठक्रमाद्बलीयसा तद्बाधेना-
२४० दित्यात्पूर्वं वायुर्नि(विश)वेश्यते, संवत्सरस्तुच्छान्दोग्ये मासात्परं श्रूयते, "तेऽर्चिषमभि सम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाण पक्षाद्यान् षडुदङ्केति मासांस्तान् मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसञ्चन्द्रमसो विद्युतन्तत्पुरुषोऽमानवस्स एनान् ब्रह्मगमयती"-
२४५ ति, वाजसनेयके तु "अर्चिषोऽह"रित्यादिमासान्तम्पठित्वा "मासेभ्यो देवलोकन्देवलोकादादित्य"मिति मासात्परतो देवलोकश्श्रूयते, तत्र द्वयोश्श्रुतित्वेऽप्यधिककालानान्यूनकालोत्तरत्वेन अहःपक्षादिषु दर्शनादर्थक्रमेण संवत्सरस्य मासात्परतो निवेशस्सिध्यति, तथाचार्थस्य क्रमनियामकत्वं श्रौत-
२५० क्रमस्य पाठक्रमाद्बलीयस्त्वञ्च पञ्चमसिद्धमुपजीव्याब्दादित्ययोरन्तरालेवायुदेवलोकशब्दार्थनिवेशं सिद्धकृत्वा "वायुमब्दा"-दित्यधिकरणे वायुदेवलोकशब्दयोर्भिन्नार्थत्वम्पूर्वपक्षीकृत्यैकार्थ्यम्प्रसाध्यते, एवम् '"तटितोऽधिवरुणस्सम्बन्धा"दित्यधिकरणे पि पाञ्चमिकन्याय उपजीव्यते, तत्र च वरुणस्य कौषीत-
२५५ किपाठक्रमादादित्यात्पूर्वत्वे प्राप्ते मेघोदरवर्तित्वलक्षणविद्युत्सम्बन्धादर्थाद्विद्युत ऊर्ध्वन्निवेश उक्तः, अर्थक्रमस्य बलीयस्त्वञ्च

पञ्चमसिद्धत्वञ्चोपजीव्यम्. • कर्तेति, "फलार्थत्वात्तु कर्म समर्थाधिकारं स्या"दित्यधिकरणे समर्थानामेवाधिकारो-नान्येषां शक्याङ्गमात्रोपसंहारेणेति निर्णयमुपजीव्यात्र
२६० विधुरादीनान्देवादीनाञ्च किं सामर्थ्यमस्ति उतनेत्यादि-चिन्तया अधिकारिविशेषनिर्णयः क्रियते, नैष्ठिकादि-भ्रष्टानाञ्च पातित्यस्मरणेन वैदिककर्ममात्रानधिकारिणाम-सामर्थ्यात् ब्रह्मविद्यानधिकारश्च प्रतिपाद्यते, एवं स्वर्ग-कामाधिकरणेन फलकामस्याधिकारे सिद्धे मोक्षकामा-
२६५ नान्देवादीनामप्यधिकारोस्ति न वेति चिन्त्यत इत्यर्थः.

अतिदेशादयश्चेति, "अन्तस्तद्धर्मोपदेशा"दित्यत्रभाष्ये "अन्तरादित्येऽन्तरक्षिणिचयः पुरुषः प्रतीयते स जीवादन्यः परमात्मैव कुतस्तद्धर्मोपदेशात् जीवेष्वसम्भवंस्तदतिरिक्त-स्यैव परमात्मनोधर्मोऽयमपहतपाप्मत्वादिः "स एष सर्वेभ्यः
२७० पाप्मभ्य" इत्यादिनोपदिश्यते", इत्युक्तम्, अनन्तरं हिर-ण्मयत्वपुण्डरीकाक्षत्वादिविशिष्टाप्राकृतदिव्यविग्रह योगञ्च परमात्मनः प्रसाध्य "अतः परस्यैव ब्रह्मण एवंरूपरूप-वत्त्वादयमपितस्यैव धर्मः, अत आदित्यमण्डलाद्यधिकरण-आदित्यादि जीवव्यतिरिक्तः परमात्मैवे"त्युपसंहृतम्, तत्र
२७५ अक्षिपुरुषेऽपहत पाप्मत्वविलक्षण विग्रहयोरतिदेशतः प्राप्ति-मुपजीव्य; तत्र विग्रहप्राप्तिः "तदेवरूपं यदमुष्यरूपम्" इत्यतिदेशात्, अत्र रूपशब्दस्य वर्णपरत्वविग्रहपरत्व संशये "एककपालानां वैश्वदेविकः प्रकृति"रिति सूत्रोक्तन्यायेन

विग्रहस्यातिदेश इति निर्णयः, तथा हि, वैश्वदेवे "द्यावा-
२८० पृथिव्य एककपाल" इति श्रुतम्, अनन्तरं वरुणप्रघासे
"काय एककपाल" इति श्रुतम्, अनन्तरं साकमेधे "एत-
द्ब्राह्मण एककपाल" इति, तत्र किं वैश्वदेविकस्यैककपालस्य
ब्राह्मणमतिदिश्यते, किं वा वारुणप्रघासिकस्येति संशये
वारुणप्रघासिकेऽल्पमाम्नातं वैश्वदेविके बहु, अतो भूयोधर्म-
२८५ लाभात् वैश्वदेविकस्यातिदेश इत्युक्तम्, अत्रापि रूपशब्देन
वर्णविशेषाभिधानेऽप्यतिदेशाद्विग्रहपरत्वे तच्छब्देन प्रकृत-
पुण्डरीकाक्षत्वहिरण्यश्मश्रुत्वादि परामर्शाद्भूयो धर्मलाभा-
द्विलक्षणविग्रहातिदेश इति निर्णयः. यद्यपि तत्राय-
म्पूर्वपक्षः, अव्यवहितत्वादेतच्छब्देन वारुणप्रघासिकस्याति-
२९० देश इति सिद्धान्तितम्, तथाप्यत्रतादृशबाधकाभावात्
तत्पूर्वपक्षन्यायेनैवार्थनिर्णयः. अपहतपाप्मत्वमपि "यन्नाम
तन्नामे"त्यतिदेशप्राप्तनामबलात्, उदित्येतन्नामह्यत्राति
दिश्यते, तस्य च "तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य
उदित" इत्यादित्यपुरुषे प्रवृत्तिनिमित्तङ्क्लृप्तम्, तथाच
२९५ तदन्यप्रवृत्तिनिमित्तकल्पने गौरवादुपास्यगुणविशेषलाभाच्च
तत्प्रवृत्तिनिमित्तस्वीकारादपहतपाप्मत्वलाभः, यथा मास-
मग्निहोत्रञ्जुहोतीत्यत्र मासाग्निहोत्रनैयमिकाग्निहोत्रयो-
रग्निहोत्रशब्दप्रयोगाविशेषादुभयत्रापि मुख्यत्वे प्राप्ते "एक-
स्यत्वभिधेयत्वे गौणत्वेनापि सम्भवात्। नान्यस्याप्यभिधेय-
३०० त्वमनेकार्थत्वदोषत" इत्येकत्रैव मुख्यत्वमुक्तम्,. तथात्राप्य-

नेकार्थत्वपरिहारायतदेव प्रवृत्तिनिमित्तमिति सिद्ध्यति. अतिदेशादय इत्यादिशब्देन ऊहादयो विवक्षिताः, अयमभावः "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"त्यत्र यज्ञादीनां विद्याङ्गत्वम्प्रतीयते, यज्ञानाञ्चाग्नेयसौर्यादीनामङ्गत्वं साङ्गा-
२०५ नामेव, अतो यज्ञाङ्गभूतस्य "अगन्मसुवस्सुवरगन्मे"त्यादिमन्त्रस्य स्वर्गरूपफलप्रकाशकस्य विद्यार्थं यज्ञाङ्गत्व "मगन्म विद्यां विद्यामगन्मे"त्यूहसापेक्षम्, अतस्साङ्गस्य यज्ञस्य विद्यार्थत्वनिरूपणमूहसापेक्षम्, ऊहश्चनावमिकन्यायाधीनः, तत्र हि "फलदेवतयोश्चे"त्यधिकरणे सौर्यादिष्वतिदेशतः
२१० प्राप्तस्य "अगन्मसुव"रिति मन्त्रस्य "अगन्म ब्रह्मवर्चस"मिति सौर्यफलप्रकाशकपदप्रक्षेपेणोह उक्तः. तथा "हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्त"मित्यत्र शाखान्तराम्नातोपायनवाक्यस्य हानिवाक्यशेषत्वङ्कुशादिदृष्टान्तेनोपपाद्य एकवाक्यत्वसम्भवे हानुपायनयोश्चिन्तने विकल्पा-
२१५ पादकवाक्यभेदो न न्याय्य इत्यत्र "तदुक्त"मिति सूत्रखण्डे दाशमिकपर्युदासाधिकरण सम्मति प्रदर्शनेन तन्न्याय उपजीव्यते, तत्र हि "नार्षेयं वृणीते" इति महापितृयज्ञाम्नातम् "यज्ञेषु (यजतिषु) येयजामहङ्करोति नानूयाजेष्वि"त्यनारभ्याधीतस्य वाक्यमधिकृत्य विचार्यते, किं वरणये-
२२०, यजामहाभ्याम्प्रतिषेधस्य विकल्पः, उत तयोर्निवृत्तिरिति, तत्र प्रतिषेधे नञोमुख्यार्थत्वलाभात् पर्युदासेकात्यायनमते समर्थसमासाच्च प्रतिषेधः, तथा च विकल्प इति "प्रतिषेधः

प्रतिदेशेनारभ्यविधाने 'च प्राप्ते प्रतिषिद्धत्वाद्विकल्पस्स्या"-
दिति सूत्रेण पूर्वपक्षङ्कृत्वा सिद्धान्तितम् "अपि तु वाक्य-
२२५ शेषस्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्या"दिति
सूत्रेण, तस्यार्थः, एकवाक्यत्वसाभासामान्येऽपि समास-
विकल्पस्य पाणिनिस्मरणाद्दृष्टदोषदुष्टविकल्पस्यान्याय्यत्वाच्च
पर्युदासः, तथा च वरणेयजामहयोर्निवृत्तिरिति.
तथा "न स्थानतोपी"त्यधिकरणे "दर्शयति चाथो अपि
२३० स्मर्यते" इत्यादि सूत्रेषु श्रुतिर्दर्शयति गुणमित्युक्तिः
पदाहवनीयन्यायेन विशेष निषेधस्य विहितविशेषेतर-
विषयत्वमभिप्रेत्य; स च न्यायोदाशमिकः. तथा
अहीन सत्रयोर्लक्षणतो भेदे तदुपजीवनेन "द्वादशाहव-
दुभयविधम्बादरायण" इत्युक्तम्. एवम् "पूर्वविकल्पः
२३५ प्रकरणात्स्यात्क्रियामानसव"दिति विद्यामयमनश्चितादीनां
विद्यामयक्रतुत्वसाधनार्थेऽधिकरणेपूर्वपक्षे विद्यामयस्यापि
क्रियामयक्रतुत्वे मानसग्रहो निदर्शितः; तस्य च द्वादशा-
हाङ्गत्वन्दाशमिके "मानसमहरन्तरं स्याद्वादशाह (स्याङ्गेद)
व्यपदेशा"दित्यधिकरणे सिद्धमुपजीव्यते. एवन्तन्त्रन्यायो
२४० "विहितत्वाच्चाश्रमकर्मापी"त्यत्रोपजीव्यते, तत्र हि कर्म-
णामाश्रमाङ्गत्वविद्याङ्गत्वसाधनपूर्वकमुभयार्थकर्मणामैक्यसाध-
नस्य तन्त्रेणानुष्ठानम्फलमित्युक्तम् पृथक्प्रयुक्तिशक्तिमदुभय-
गोचरत्वे देशकालाद्यैक्ये च सकृत्करणन्तन्त्रम्, तच्चैकादशे
स्थापितम्. विद्यार्थकर्मणैव प्रसङ्गात्सिद्धिरित्याचार्य-

२४५ मेघनादारिसूरयः, तेषामेतद्विचारस्य प्रसङ्गः फलम्. उप-
योगान्तरमाह **विद्येति,** विद्याङ्गभूतेत्यनेनाङ्गाङ्गिविचार-
त्वाद्दर्शपूर्णमासप्रयाजादिशास्त्राणामिव परमशास्त्रैक्यमवर्ज-
नीयमिति सूचितम्, अनेन शारीरकतृतीयाध्यायेनैक्य-
मुक्तम्भवति, **न हीत्यादिना** "सर्वापेचा चे"त्यनेन ऐक्य-
२५० मुक्तम्भवति. उपयोगान्तरमाह **यज्ञादीति.** अस्तु तर्हि
ब्रह्मैकविषयतया विचारसङ्कोचः, अतिशयितपुरुषार्थप्रतीतौ
"स्थितेऽरविन्द" इति न्यायावताराद्दित्यत्र चोद्ये यद्युक्त-
हेतुना ब्रह्ममात्रे विचारसङ्कोचः तदा कर्मानुष्ठानस्यैवा-
भावात्प्रत्यचविरोधः, कथञ्चित्तदुपपादने च शास्त्रैक्यं सिध्ये-
२५५ दित्यनिष्टापादनेन सङ्कोचकलासम्भवेन परिहार उक्तः,
इदानीमतिशयितपुरुषार्थप्रतीतिरूपहेतुं ग्रन्दूषयितुमनुव-
दति **यज्ञातिशयितेति,** हेतंशानुवादे तात्पर्यम्. **ननु
पूर्वापरेति,** ततश्च कर्मफलस्य वस्तुतः चयिष्णुत्वमेवेति
भावः. **किन्तेनेति,** वास्तव वैषम्येणेत्यर्थः. ननु साचात्का-
२६० रस्य भ्रमनिवर्तकत्वात्तस्य च श्रवणादिजन्यत्वान्मीमांसा-
पेचेत्यचाह **तत एवेति,** स्वतोऽपरोचविषये त्वम्मते अवि-
चारितेनापि शब्देन साचात्कारस्यैवोत्पादात्, अन्यथा
विचारितेनापि तदनुत्पादादिति भावः. **अत इति,** एक-
ग्रन्थत्वपर्यन्तमैकशास्त्र्यमिह साध्यम्, तस्यैव क्रमहेतुत्वात्,
२६५ तत्रैकग्रन्थव्याख्यानात्मत्वं हेतुः. एकव्याख्यानात्मत्वेऽपि
तद्ग्रन्थाचिख्यासयैव प्रवृत्तौ नोभयोरेकग्रन्थत्वमित्यचोक्तंस

एकस्यैवेति, शास्त्रमित्यनन्तरमध्याहृतमिति शेषः, पूर्वोक्त-
रीत्या प्राथमिकसामान्यजिज्ञासानुसारेणैव ग्रन्थप्रवृत्तिर्यु-
क्तेति भावः. एकव्याख्येयव्याख्यानात्मना प्रवृत्तमित्यत्र
२७० "अथातो धर्मजिज्ञासा" इति सूत्रस्यारस्यमभिप्रेतम्, तत्र
ह्यथशब्दः कृत्स्नवेदाध्ययनानन्तर्यपरतया सर्वसम्मतः, अत-
श्शब्दोऽपि कृत्स्नवेदाध्ययननिर्वृत्तेर्हेतुत्वपरतया, अत इद-
म्पदद्वयं मीमांसाद्वयस्यापि सामान्येन कर्तव्यतां हेतु पूर्व-
वृत्तोपन्याससुखेन साधयत् विंशतिलक्षण्यास्सामान्येन वेदा-
२७५ र्थविशदीकरणे चिकीर्षामूलतां तन्निबन्धनमैकग्रन्थ्यञ्च
स्पष्टमाचष्टे. तथैतत्सूत्राभिप्रेतौ पूर्वोत्तरपक्षहेतू अपि
अविवक्षितार्थत्वविवक्षितार्थत्वे अनवकाशावकाशौ प्रवर्तका-
भाव तत्सद्भावौ वा साधारण्येन मीमांसामात्रस्यानारम्भ-
णीयत्वारम्भणीयत्वसमर्थनमुखेन मीमांसायास्सामान्येन वे-
२८० दार्थविशदीकरणकर्तव्यताबुद्धिनिबन्धनत्वं तन्निबन्धनमै-
कग्रन्थ्यञ्च स्पष्टमाचक्षाते, न चैवं सति विंशतिलक्षणी
जैमिनिनैव कर्तव्येति वाच्यम्, तत्कर्तव्यतां समर्थितवतैव
तत्कर्तव्यमिति नियमे ईश्वरेणैव सकलकर्मानुष्ठानप्रसङ्गात्,
नन्वव्यवहितस्वकृत्यारम्भसमर्थनार्थमिदं सूत्रमित्यवधानात्
२८५ अवगम्यते, अन्यथैतत्सूत्रानन्तरम्प्रमाणप्रमेयेत्यादिशास्त्रस्यापि
प्रवृत्तिप्रसङ्गात्, अत एवोक्तम् "यदा हि धर्मजिज्ञासा
कर्त्तव्येत्युक्त्वा शास्त्रमारभ्यमाणं दृश्यते, तदा नूनमिदं
शास्त्रन्धर्मप्रतिपादनप्रयोजनमित्यवगम्यत" इति. अत एव

तत्सूत्रस्य साधारणत्वे जैमिनिनैव सर्वङ्कर्तव्यमिति चेदु-
३९० च्यते, धर्मजिज्ञासासूत्रस्य मीमांसामात्रसाधारण्यन्तावत्सि-
द्धम्, अधीतसाङ्गसशिरस्कस्वाध्यायस्य पुरुषस्य वेदार्थजिज्ञा-
सोदयात् तदनुजिघृक्षया शास्त्रम्प्रणेष्यतां अविवक्षितार्थ-
त्वादिनानारम्भणीयत्वमाशङ्क्य विवक्षितार्थत्वादिभिरारम्भ-
णीयत्वसमर्थनात्, कृत्स्नवेदार्थजिज्ञासु पुरुषानुग्रहार्थत्वञ्च
३९५ शास्त्रस्याथातश्शब्दाभ्यामवगम्यते, एवञ्च शास्त्रप्रवृत्तिनि-
मित्तजिज्ञासासाधारण्यात् साधारणजिज्ञासामूलशास्त्रसम-
र्थनार्थस्य साधारणविषयत्वौचित्यात् अथातश्शब्दबलात्पू-
र्वोत्तरपक्षयुक्तिसाधारण्याच्च अस्य (शास्त्रस्य) सूत्रस्य विंश-
तिलक्षणीसाधारण्यं सिद्धम्, तत्र यदि प्रतिज्ञासाधारण्ये
४०० सर्वञ्जैमिनिनैव कर्तव्यम्, न च तथा क्रियत इति विचि-
कित्सा जायेत, तदा गुरुशिष्याभ्यां सामान्यचिकीर्षामूल-
मेकमेव कार्यम्परस्परसम्मत्या प्रत्येकावयवनिर्माणमुखेन निर्व-
र्त्यत इति समाधानमुचितम्. ननु धर्मशब्दे विद्यमाने
कथं सूत्रस्य वेदान्तसाधारण्यम्, धर्मशब्दस्य वेदार्थपरत्वात्,
४०५ न च धर्मशब्दलक्षणादोषः, उक्तयुक्तिभिः वाक्यतात्पर्ये
निश्चिते तदनुसारेण लक्षणाया ज्यायस्त्वात्, तदुक्तम्पूर्वतन्त्रे,
"अभ्युदये कालापराधादिज्या चोदनास्यात्यथा पञ्चशरावे"
"यस्य हविर्निरुप्तम्पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुला-
न्विभजेद्ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं
४१० कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठा-

स्ताग्निष्णवे शिपिविष्टाय शृते चरु”मिति, तत्र संशयः किङ्कर्मान्तरमिदमुतप्रक्रान्तस्यैव दर्शप्रयोगस्य पूर्वदेवताभ्यो-ऽपनयो देवतान्तरसंयोगश्चोद्यत इति, तत्राग्नेर्देवतायास्त-द्गुणस्य दातृत्वस्य च विधौ वाक्यभेदात्तद्विशिष्टङ्कर्मान्तरं
४१५ विधीयते, एवमप्राप्तदधियोगोद्देशेन स्वविष्ठानाश्यत्वस्य दध्नोऽधिकरणत्वस्य इन्द्रस्य देवतायाः प्रदातृत्वस्य तद्गुणस्य च विधौ वाक्यभेदात्तद्विशिष्टङ्कर्मान्तरं विधीयते, एवं शिपिविष्टविष्णुदेवताकशृताधिकरणकाणिष्ठचरुहविष्कङ्कर्मा-न्तरं विधीयत इति पूर्वः पक्षः, प्रकृतप्रत्यभिज्ञानात्तदेव
४२० कर्म, न च वाक्यभेदः, अपरित्यक्तयागान्वयानामेव सता-न्दधिस्थविष्ठादीनान्देवतान्तरसम्बन्धमात्रविधानात्, देवता-यास्तद्गुणस्य च विधानादपि न वाक्यभेदः, दातृत्वादि-विशिष्टाग्न्यादेरेकस्यैव सम्प्रदानकारकस्य विधानात्, त्रेधा तण्डुलानिति तु देवतान्तरसंयोगविधानार्थम्पूर्वदेवताभ्यो-
४२५ ऽपनयो विधीयते, तत्र च दधिशृतयोरपि देवतान्तर-संयोजनार्थन्तण्डुलशब्देन तण्डुलादि प्रकृतहविर्मात्रं लक्ष्यते, तण्डुलविभागमात्रस्य मध्यमादिविनियोगलभ्यत्वाच्च विधि-वैयर्थ्यात्, तदेवन्न कर्मान्तरम्, एवन्देवतान्तरेण संयोज्य-मानं हविषाम्पूर्वदेवतापनयविधिपरं “त्रेधा तण्डुलान्वि-
४३० भजे”दिति वाक्यमिति निश्चिते दध्यादिसाधारण्यार्थन्त-ण्डुलशब्दो हविर्मात्रोपलक्षणमित्युक्तम्, अथवा उपांशु-रूपधर्मप्रतिपादनात् कात्र कथन्ता, उपांशुत्वस्य शाब्द-

प्राधान्येऽपि ब्रह्मण आर्थप्राधान्यन्न हीयते, ब्रह्मण एव शाब्दप्राधान्येऽपि न शङ्कावकाशः, धर्मशब्दो भगवत्प्रीतौ
४३५ मुख्यः, कर्मव्यापारो हि धर्मशब्दार्थः, स च प्रसाद एव. अथवात्र सूत्रे धर्मपदमलौकिकश्रेयस्साधनंलक्षणन्निमित्तीकृत्य प्रवर्तते, अत एव. "द्रव्यक्रियागुणादीनान्धर्मत्वं स्थापयिष्यते।" इत्युक्तम्, अतो यागादीनाम्ब्रह्मणश्च प्रीतिद्वारकश्रेयस्साधनतायां अलौकिक्याविद्यमानत्वाद्धर्मशब्द इह
४४० यागादिब्रह्मसाधारणः. एतदेवाभिप्रेत्यानुगृहीतमाचार्यैः, "अलौकिकश्रेयस्साधनन्धर्मः, तदनुयायिप्रतिपाद्य"मित्यादि, अत्रत्यधर्मशब्देन कर्मब्रह्मरूपद्वयं साक्षात्परम्परया वा श्रेय उपयोगमात्रादिवक्षितमिति भावः. अथवा अलौकिकश्रेयस्साधनताया धर्मशब्दप्रवृत्तिनिमित्तत्वात् ब्रह्मण
४४५ एव तत्साधनत्वात् प्रसादस्य च व्यापारमात्रत्वात्तादृशश्रेयः कर्तृत्वस्य प्रवृत्तिनिमित्तत्वाद्वा ब्रह्मैव धर्मशब्दस्य मुख्यार्थः, "ये च वेदविदो विप्रा, ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानङ्कृष्णन्धर्मं सनातनम्॥" इत्युक्तेः. तस्य च साध्यत्वम्प्रसादरूपव्यापारविशिष्टविशेषेण, तस्माद्धर्मजिज्ञासेत्यस्य
४५० ब्रह्मजिज्ञासेत्यर्थः. एतदेवाभिप्रेत्यानुगृहीतमाचार्यैः "अथातो धर्मजिज्ञासा" "इत्येवोभयभागसाधारणार्थप्रतिज्ञा" इत्यादि. ननु तर्हि कथम्ब्रह्ममीमांसायाङ्कर्ममीमांसाया अवकाशः, अत्राप्यनुगृहीतम् "कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादे सङ्गत" इति, अत्रत्य ब्रह्ममीमांसा-

४५५ शब्दः "अथातो ब्रह्मजिज्ञासा" इति सूत्रविवक्षितब्रह्म-
मीमांसापरः, अतस्तृतीयलक्षण इत्युक्तिसम्भवः, तृतीय-
लक्षणचतुर्थपादे "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यत्र
कर्मणामुपासनाङ्गत्वप्रतिपादनात् तत्र सङ्गततया कर्मनिरू-
पणं युज्यत इति . यद्येवन्तर्हि तत्रैतद्विचार्यम्, अत्राप्यनु-
४६० गृहीतम् "ब्रह्मविचारान्तर्भावेऽपि पृथक्करणमुपपद्यते, यथा
निग्रहान्तर्गतयोश्छलजात्योराह्निकभेदेन पृथगुक्तिः, यथाच
निग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन पृथगुक्तिः, पृथक्कर-
णञ्च बहुग्रन्थप्रतिपाद्यत्वात्, तत्र च पूर्वभावित्वमुपजीव्यो
पजीवकभावादिवक्ष्यमाणहेतुनिबन्धनम्" इति, "अथातो
४६५ धर्मजिज्ञासा" इति सपरिकरब्रह्मजिज्ञासाम्प्रतिज्ञाय त्रैव-
र्गिक मुमुक्षुसाधारणतया मुमुक्षुसाधारणतया च विचारा-
वान्तरभेदं विवक्षित्वा मुमुक्षुसाधारणब्रह्मविचाराधिकार-
हेतुतया नियतपूर्वभावपूर्वभावत्कर्मविचारं सर्वानुग्रहार्थं
प्रथमतः पृथङ्निर्वर्त्त्य अधिकारप्रदर्शनार्थं सिद्धे व्युत्पत्त्य-
४७० भावलक्षणपूर्वपक्षनिराकरणार्थञ्च "अथातो ब्रह्मजिज्ञासा"
इति मुमुक्षुसाधारणब्रह्मविचारम्पुनः प्रतिज्ञाय तद्विचारः
प्रवर्त्यते मुनिदयया भगवत्येत्याचार्याभिप्रायः . वेदार्थजि-
ज्ञासेति वा ब्रह्मजिज्ञासेति वा वक्तव्ये धर्मजिज्ञासे-
त्युक्तिः श्रेयस्साधनत्वप्रतिपादनेन मीमांसाया रागप्राप्ति-
४७५ सूचनमुखेन प्रवर्तकाभावादनारम्भ इति पूर्वपक्षनिराकर-
णाय रागस्यैव प्रवर्तकत्वात् आरम्भ इति राद्धान्तसूचनार्थाः

एतेन शास्त्रैक्ये आदौ साधारणप्रतिज्ञया भवितव्यमित्ये-
तन्निराकृतम्, प्रतिज्ञायास्सामान्यविषयत्वोपपादनात्, यदि
सामान्यविषयत्वन्तर्हि कर्मविषयविशेषप्रतिज्ञया भवितव्यम्,
४८० मैवम्, तदसाधारणपूर्वपक्षानुत्थानेन तदर्थमधिकरणानार-
म्भात्, स्वकर्तव्यार्थप्रदर्शनमात्रप्रयोजनप्रतिज्ञा चार्थसिद्धा,
पक्षान्तरेऽपि सार्थसिद्धैव, न्यायपरत्वात्सूत्रस्य, तथाविधसूत्रा-
करणञ्च न्यायनिबन्धनात्मके शास्त्रे तादृशस्य निवेशायो-
गात्, "शब्दाबोध्यत्वशङ्कापरिजिहीर्षया च पुनः प्रतिज्ञा
४८५ कृते"ति वाक्येनाचार्यैरयमर्थस्सूचितः, अत एव वेदान्ता-
चार्यैः "तस्य निमित्तपरीष्टिः" इति सूत्रव्याख्याने "इद-
मपि सूत्रन्न केवलम्प्रतिज्ञापरम्, अपि तु प्रमाणमात्रस्या-
परीक्षणीयत्वपूर्वपक्षप्रतिक्षेपार्थम्" इत्यनुगृहीतम्, अर्वा-
चीनव्याख्यातृभिरपि वेदार्थमात्रविचारप्रतिज्ञारूपत्वमस्य
४९० सूत्रस्याङ्गीकृतमेव, परन्तु धर्मस्यैव कृत्स्नवेदार्थत्वं वेदान्त-
भागस्य तच्छेषत्वञ्च तैरुक्तम्, वेदान्तिभिस्तु कर्मब्रह्मरूपार्थ-
द्वयम् भागद्वयार्थतयाङ्गीकृतमितीयानेव विशेषः, वेदार्थ-
मात्रविचारप्रतिज्ञारूपत्वे न विवादः. किञ्चैवं यदि विशेष-
प्रतिज्ञा, तदा ह्यनपेक्षितविधानापेक्षितपरित्यागयोः प्रसङ्गः,
४९५ सामान्यप्रतिज्ञा ह्यविवक्षितार्थत्वादिनिराकरणेन विवक्षि-
तार्थत्वादिसमर्थनार्थमपेक्षिता, विशेषप्रतिज्ञा तु पूर्वभाग-
विषये नापेक्षिता, ब्रह्मभाग इव कर्मभागासाधारणपूर्वपक्ष-
स्यानुदयात्, अत एव पूर्वतन्त्रे "पानव्यापच्च तद्व"दित्य-

धिकरणे "यस्सोमं वामीत स श्यामाकं चरुं निर्वपे"दिति
५०० विहितेष्टिः किं लौकिके वैदिके वमने सर्वत्रोत वैदिक
एवेति विशये अविशेषात्सर्वत्रेति प्राप्ते सम्यग्जरणपर्यन्त-
भक्षणस्य विहितत्वाद्वमने तद्वैगुण्यात् तत्समाधानमपेक्षितम्,
लौकिकन्तु भक्षणं वमनार्थमेवेति न तत्रापेक्षेत्यपेक्षितत्वा-
द्वैदिक एवेष्टिविधिरित्युक्तम् . तथा "पत्नीसंयाजान्तत्वं
५०५ सर्वेषामविशेषात्," (इत्यत्र) "पत्नीसंयाजान्तान्यहानि
सन्तिष्ठन्त" इति द्वादशाहे श्रूयते, किमिदमह्नामविशेषेण,
उत उत्तमवर्जमिति विशये, अविशेषप्रवृत्तविधेस्सङ्कोचा-
योगात्सर्वेषाम्पत्नीसंयाजान्तत्वमिति पूर्वपक्षे, द्वादशया-
गानां सहकर्तव्यत्वेन चोदितत्वात् पूर्वमहः कस्मिंश्चित्प-
५१० दार्थेऽवस्थाप्यापरस्यारम्भणीयत्वात्कस्मिन्पदार्थे अवस्थापन-
मित्यपेक्षायाम्पत्नीसंयाजान्तेऽवस्थापनमित्युच्यते, उत्तमस्य तु
नापेक्षा, इतरयागसाहित्यस्य क्वचिदवस्थापनाभावेऽपि
सिद्धेः, अनपेक्षितविधानायोगात्, इत्युत्तमवर्जम्पत्नीसंया-
जान्ततेति व्यवस्थापितम्, अतोऽपेक्षितत्वात्साधारणप्रति-
५१५ ज्ञैवोचिता . ननु किञ्चित्प्रयोजनसिद्ध्यर्थन्तदर्थिनम्प्रत्यर्थ
विशेषप्रतिपादनार्थम्प्रवर्तमानम् अर्थप्रयोजनाधिकार्युद्दे-
श्यैक्ये एकम्, तद्भेदाद्भिन्नञ्च स्यात्, यथा न्यायशास्त्रशब्द-
शास्त्रे प्रत्येकमर्थोद्देश्याद्यभेदादभिन्ने, तद्भेदाच्च परस्परं भिन्ने,
इह च कर्मब्रह्मलक्षणार्थभेदात् भोगमोक्षरूपप्रयोजनभेदात्
५२० तदर्थिरूपाधिकारिभेदाच्च तदुद्देशा अपि भिन्ना एवेति

कथं शास्त्रैक्यमित्याशङ्कामनूद्य परिहरति, एतेनेति, अर्था-
द्देशो वेदार्थत्वपुरस्कारेण वेदार्थप्रतिपादनमथा कार्यमिति
प्रवर्त्तमान एक एव, प्रयोजनोद्देशोऽपि प्रयोजनसिद्ध्यर्थ-
मिति प्रवर्त्तमान एक एव, अधिकार्युद्देशोऽपि पुरुषार्था-
५२५ र्थिनमतीति प्रवर्तमान एक एव, पुरुषार्थसिद्ध्यर्थन्तदर्थिन-
मति वेदार्थप्रतिपादनङ्कार्यमितीच्छया मीमांसाशास्त्र-
प्रणयनादिति परिहाराभिप्रायः. ननूक्तरूपेणैक्येऽप्यवान्त-
रार्थप्रयोजनादिभेदेन तदुद्देशस्यापि भेदात् शास्त्रभेद-
स्यादित्यत्राह अवान्तरेति. न चैवमिति, सामा-
५३० न्यक्रोडीकारमात्रेणैकत्वे वेदार्थानुबन्धित्वाल्लौकिकार्थानु-
बन्धित्वादिना रूपेणैकोद्देशसम्भवाच्छन्दश्शिक्षाप्रभृतीना-
मेकविद्यास्थानत्वमेव स्यादित्यर्थः. उपकारेति, उक्तरीत्या
सामान्यतः क्रोडीकारसम्भवेऽपि न तथोद्देशेन शास्त्र-
प्रवृत्तिः, किन्तु वर्णशिक्षाद्युपकारविशेषोद्देशेन शिक्षादेः
५३५ प्रवृत्तिः, अतस्तेषाम्भेद एव, मीमांसाशास्त्रञ्च वेदार्थविशदी-
करणरूपैकोपकारोद्देशेनैव प्रवृत्तमिति भावः. अदूरेति,
स च तत्त्वनिर्णय प्राधान्यात्. नन्विह वेदार्थविशदीकर-
णादेकविद्यास्थानत्वे स्मृतेरपीतिहासपुराणाभ्यां सहैक-
विद्यास्थानत्वप्रसङ्गः, तत्त्वाचारविशदीकरणरूपावान्तरभेद-
५४० विवक्षायां कर्मब्रह्मभेदविवक्षया मीमांसायामपि विद्या-
स्थानभेदप्रसङ्ग इत्यत्राह न चेति, तत्तत्प्रवृत्तिप्रयोजकोप-
कारविशेषमालोच्य विद्यास्थानभेदान् परिगणयद्भिस्तत्त-

त्प्रथम्ग्रभिप्रायविद्भिर्महर्षिभिः मीमांसेत्येकविद्यास्थानत्वेन कीर्तनान्मीमांसाया एकोद्देशेन प्रवृत्तिरवगम्यत इति भावः.

५४५ अन्यथेति, फलकरणेतिकर्तव्यतादिनिरूपणार्थत्वात्सत्यत्व-तात्पर्याभ्युपगमे वेदान्तभागेऽपि करणेतिकर्तव्यतारूप-प्रमाणतर्कव्युत्पादनार्थत्वात्सत्यत्वतात्पर्याभ्युपगमप्रसङ्गाद्व्याघात इत्यर्थः. सगुणेति, तत्रापि सत्यत्वतात्पर्याभ्युपगमप्रसङ्ग-नार्थविरोधादित्यर्थः. देवताकाण्डस्येति, तथाच कर्म-

५५० काण्डे देवतानिराकरणासम्भव इति भावः. अत एवेति, देवताकाण्डेनैकशास्त्र्यादित्यर्थः. यदि प्राबल्यमात्रपरम् तर्हि पूर्वपक्षप्रतिक्षेपो न स्यात्, प्राबल्यपरत्वस्यासम्भवि, न्यायनिबन्धनत्वाच्छास्त्रस्येत्यत्राह किमलौकिकेति, अभ्या-हत्यवादेन परप्रतिक्षेपसिद्धिः, न्यायनिबन्धनत्वेऽपि प्ररो-

५५५ चनालक्षणप्रयोजनसाम्यात् प्राबल्यपरत्वोक्तिरिति भावः. अश्रुतेति, फलप्रदत्वाभिमतानामिन्द्रादिदेवतानामभावे-ऽनन्तरसर्गे तत्फलावाप्तिर्न स्यात्, अकृताभ्यागमश्च स्यादिति बुद्ध्या कर्मण्यश्रद्धा स्यात्, श्रुतवेदान्तानान्तु अनादिनि-धनसर्वज्ञसर्वशक्तिपरमपुरुषाराधनरूपत्वात् सर्वकर्मणान्तेनैव

५६० तत्फलदाननिश्चयान्नाश्रद्धेति भावः. इदञ्चार्वाचीनोक्तसू-त्रार्थमङ्गीकृत्योक्तम्. वस्तुतस्तु न सूत्रेषु देवतानिराकरण-प्रतीतिः, तानि चैवं व्याख्यातानि तत्त्वटीकायां वेदान्ता-चार्यैरेव, "देवतोद्देशेन द्रव्यन्त्यजन्देवता न प्रयोजयेत्, कुतः, कृष्यादिवत्फलसाधनभूतक्रियाया एव प्रयोजकत्वोपपत्ते-

५६५ सत्राह "देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वा"-
दिति, वा शब्दश्शङ्कानिवर्तकः, हविरुद्देश्या देवता फलार्थिनं
स्वाराधने (प्रवर्त्तयेत्,) प्रयोजयेत्, कुतः भोजनस्य तदर्थ-
त्वात्, भोजनस्य-हविषः तत्समर्पणस्य च तदर्थत्वात्तच्छेष-
त्वात्, सम्प्रदानभूता हि देवता प्रधानतया स्वार्थे द्रव्यतत्सम-
५७० र्पणे प्रयुङ्क्ते. क्रियाप्रधानवाक्येषु न्यग्भूतापि हि देवता
तत्तन्मन्त्रादिशामर्थ्यादार्थप्राधान्यशालिनी ॥ अतो यथा
विग्रहादिमानतिथिराराध्यः स्वार्थं स्वाभीष्टमुपचरणम्प्र-
युङ्क्ते, तथा देवतापीति. (स्वार्थपत्याच्च). 'अर्थवत्वाच्च'.
अर्यते प्राप्यत इत्यर्थो विभूतिः, अर्थ्यत इति वा, अतस्त-
५७५ दभावादनाराध्या अनीप्सितत्वादप्रयोजिकेति न शङ्कनी-
यम्, परां खलु देवता सर्वस्येष्टे, तन्नियुक्ता चापरा यथा-
धिकारन्तत्तद्विभूतीनाम्. तथापि निरपेक्षा देवता न कुत-
श्चित्प्रीयेत, न कञ्चित्प्रीणाति, अतः कथम्प्रयोजिकेत्यत्राह,
"ततश्च तेन सम्बन्धः", ततो नैरपेक्ष्येऽपि नरदेवनीत्या
५८० दयौदार्यशालिन्याः परिचर्यमाणायाः प्रसेदुष्या देवताया
एव हेतोः परिचरतां स्वाभीष्टफलेन सम्बन्धः (स्तुत्युपचा-
रादिभिरेव) सिद्ध इति पूर्वः पक्षः. राद्धान्तस्तु "अपि वा
शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात्", अत्र अपि वेति साधा-
ङ्गीकारम्परपक्षव्यावर्तनम्, यद्यपि देवताया विग्रह हविरा-
५८५ दानं युगपत्कर्मसन्निधि प्रीति फलप्रदानरूपविग्रहादिपञ्च-
कन्दुर्निषेधम्, द्रव्याद्यपेक्षया सम्प्रदानस्य प्राधान्यं यजेस्स

देवताराधनवाचितया यागस्य तादर्थ्यं सिद्धपरवाक्येषु च परावरदेवतयोस्स्वरूपादिकमनन्यार्थमामनामः, तथापि कर्त्तव्योपदेशेषु यज्ञादिरूपङ्कर्म स्वर्गादिफलसाधनतया चो-
५९० दितत्वात्प्रधानं सत् साध्यतया बुद्ध्यारोहेण पुरुषम्प्रवर्तयति, इत्यस्य देवतादि क्रियाशेषभूतम् . ननु फलप्रदाया देवताया आराध्यत्वेन प्रधानत्वमनुशोश्रूयामहे अत्राह, "गुणत्वेन देवताश्रुतिः", हविष्प्रदानम्प्रति गुणीभूतां हि देवतामनुश्रूणुमः, मन्त्रार्थवादोपस्थापितन्देवताप्रीतिरूप-
५९५ मपूर्वम् चोदितस्य क्षणिकस्य कालान्तरभाविफलद्वारतयोपादीयेत, अतो वास्तवप्राधान्यशालिन्यपि देवता फलकामप्रवर्तकशाब्दप्राधान्यक्रियागुणीभूता न प्राधान्येन प्रयोजिकेति . अतिथेस्तर्हि कथम्प्रयोजकत्वम्, इत्थमित्याह, "अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्", आतिथ्यम्प्रत्य-
६०० तिथेः प्रधानत्वम्प्राप्तम्, अन्यथा हि तदर्थे कर्मणि प्रयोजकाभावात्तदभावस्स्यात् . तत्सपर्या(प्रयुक्ति)विधिरेव तत्र प्रयोजक इति चेत्, तत्र प्रत्याह, "तस्य प्रतिविधानत्वात्", आतिथ्यकर्मणो हि अतिथ्यागमनप्रतिविधानतयैव चोदना ; क्रियाप्रयुक्तपुरुषसमाहृता तु देवता । सन्निधत्ते तदिष्टार्थं
६०५ न ततस्तत्प्रयुक्तता ॥ अतिथिस्तु स्वयम्प्रा(प्य)प्तः स्वाभीष्टस्य प्रयोजयेत् । तदिष्टानुविधानेन तत्सपर्यार्थचोदना ॥ अतः आम्नायाम्नायविवेकादतिथिप्राधान्योक्तिः" इति . ननु किमर्थमध्यारोहेण चित्तसङ्क्षोभः क्रियते, यावता परमात्मसम-

र्थनादेव प्ररोचनासिद्धिरित्यभाह सहसा चेति, निर्धा-
११० रितकर्मस्वरूपस्यैव ब्रह्मज्ञानाधिकार इति भावः. अन्या-
रब्धवादत्वे हेतुमाह एवं सतीति, न चैकरस्यासिद्धिः
परस्येष्टैवेति वाच्यम्, "मध्वादिष्वसम्भवादनधिकारञ्जै-
मिनिः" इत्यादावैकरस्य प्रतीतेस्तत्परित्यागायोगादिति
भावः. ननु "विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदु-
११५ पाख्यत्वात्" इत्यधिकरणे "ऐन्द्रमेकादशकपालन्निर्वपे"-
दिति विहिते विकृतियागे द्रव्यत आग्नेयसाम्याद्देवता-
तस्सान्नाय्ययागसाम्याच्च कस्य धर्मा ग्राह्या इति विचारे
द्रव्यसाम्यस्य बलीयस्त्वात्तेन प्रकृतिनियम इति समर्थितम्,
तच्च प्राबल्यदौर्बल्ये सत्त्वासत्त्वनिबन्धने एवेति विरोध इत्य-
१२० चाह द्रव्यदेवतयोरिति, देवतायाः स्वरूपन्देवतात्वञ्चा-
प्रत्यक्षम्, द्रव्यस्य तु हविष्ट्वधर्म एवाप्रत्यक्ष इति प्रतीति
शैघ्र्यविलम्बाभ्यामेव प्राबल्यदौर्बल्ये इति भावः. ननु
धर्मिणः प्रत्यक्षगम्यत्वङ्कुतस्प्राबल्यहेतुः, यत्कर्मसाम्यं शीघ्र-
म्प्रतीयते तद्धर्मातिदेशः कार्य इति हि वक्तुं युक्तम्, न च
१२५ द्रव्यसम्बन्धो देवतासम्बन्धाच्छीघ्रम्प्रतीयते, येन प्राबल्यं
स्यादिति चेत्, सत्यम्, द्रव्यवाचिपदानां लोके व्युत्पन्नतया
द्रव्यविनियोजकवाक्यश्रवणसमनन्तरमेव झटिति द्रव्यसम्बन्धः
प्रतीयते, देवतावाचिपदानांलोकाव्युत्पन्नतया तद्विनियोज-
कवाक्यश्रवणसमनन्तरन्ततः प्राग्वा श्रौतव्यवहारदर्शनात्को-
१३० ऽयमिन्द्र इति जिज्ञासायां "वज्रहस्तः पुरन्दर" इति वाक्य-

श्रवणेन वा पुराणादिश्रवणेन वा अन्यथा वेन्द्रादिपद-
व्युत्पत्तौ सत्यान्तत्सम्बन्धप्रतीतिरित्यस्यैव द्रव्यसम्बन्धप्रतीतौ
शीघ्रभावः. किञ्च देवताऽभावो न दौर्बल्ये हेतुः, किन्तु
तत्साम्यं निबन्धनातिदेशाभाव एव हेतुरिति, कुतः प्राबल्य-
६३५ दौर्बल्यचिन्ता, कुतश्च देवतासाम्यात्क्वचिदतिदेशः. यदि
शब्दस्यैव देवतात्वात्तत्सम्बन्धादतिदेशः, तर्हि द्रव्यदेवतयोः
को विशेषः, अतः सम्प्रदानादपि करणस्य त्यागस्वरूपो-
त्पादकतया प्रथमाकाङ्क्षितत्वाच्च प्राबल्यन्द्रव्यस्य ग्राह्यम्.
**धर्मत्वमिति**, अलौकिकश्रेयस्साधनत्वमित्यर्थः. **मध्वा-**
६४० **दिष्विति**, मधुविद्यादिषु वस्वादीनामनधिकारञ्जैमिनि-
राचार्यो मन्यते, कुतः, असम्भवात्, तत्र हि विद्यायां वस्वा-
दय उपास्याः, न च तत्र त एव कर्तारस्सम्भवन्ति, कर्मकर्तृ-
विरोधादित्यर्थः, अत्र च वस्वादिजीवपर्यवसितमुपासन-
मित्याशयेन पूर्वपक्षोत्थानादर्थविरोधः. **धर्ममिति**, धर्म-
६४५ मेव फलप्रदञ्जैमिनिराचार्यो मन्यते, कुतः अत एव श्रुते-
रुपपत्तेश्च, अभिलषितस्वर्गस्य तत्साधनतया "स्वर्गकामो
यजेत" इति श्रुत्या यागस्यैव बोधनात्, कृष्या-
दिवदाराधनरूपलाभावेऽपि कालान्तरभाविफलप्रदत्वोप-
पत्तेश्चेत्यर्थः. **शेषत्वादिति**, "तत्त्वमसि" इत्यादिसामा-
६५० नाधिकरण्येन कर्मसु कर्तुरेव ब्रह्मत्वावगमात् तद्वेदनस्य
तत्संस्कारतया कर्मशेषत्वाद्द्रव्यादिष्विव फलश्रुतिरर्थवाद
इति जैमिनिर्मन्यत इत्यर्थः. **परामर्शमिति**, "त्रयो धर्म-

स्कन्धा” इत्यत्र चोदनाभावात् उपासनस्तुत्यर्थमनुवादमेव जैमिनिर्मेने, “वीरहा वा एष देवानां योऽग्निमुद्वासयते” इत्यपवदति चाश्रमान्तरमित्यर्थः. परमिति, परमेव ब्रह्मो-
पासीनानर्चिरादिर्नयतीति जैमिनिः, “ब्रह्म गमयती”ति तत्रैव मुख्यत्वादित्यर्थः. ब्राह्मेणेति, अस्य स्वरूपाविर्भावो ब्राह्मेणापहतपाप्मत्वादिस्वरूपेण, ते हि ब्रह्मगुणाः प्रत्यगा-
त्मनोऽपि स्वाभाविका इति “य आत्माऽपहतपाप्मा” इत्यारभ्योपन्यासादिभ्योऽवगम्यते, न तु ज्ञानस्वरूपेणा-
विर्भाव इति जैमिनिरित्यर्थः. भावमिति, “स एकधा भवति” इत्यादिना देहेन्द्रियादिभिः विविधताश्रुतेर्देहा-
दीनाम्भावमेव जैमिनिर्मेने न कदाचिन्मुक्तोऽशरीरत्व-
मित्यर्थः. यद्यप्येते सर्वेऽर्था न पूर्वकाण्डे सूचिताः, अतो नार्थविरोधः, तथाप्युक्तरीत्या भिन्नमतस्थत्वात्तत्कर्तृकेण सह नैकशास्त्र्यमिति भावः. प्रौढवादेन परिहरति अत्यल्प
तरेति, अत्यल्पतरविवादस्य अप्रधानार्थविवादस्य चेत्यर्थः, तेन भगवतः फलप्रदत्वरूपप्रधानार्थविरोधेऽपि तस्याल्पत्वा-
दितर बह्वर्थविरोधेऽपि तेषामप्रधानत्वान्न दोष इति भावः.
प्रतिसंस्कारोऽत्र विपरीतार्थप्रतिपादनम्. तात्त्विकपरिहार-
माह यद्वेति, वैभवोऽत्यवगमो गुरुशिष्ययोरैककण्ठ्यादि-
त्यभिप्रेत्य तयोरैककण्ठ्यमुपपादयति तदुक्तान्तदुक्तमित्या-
रभ्याचख्युरित्यन्तेन ग्रन्थेन. छन्दोगानां वाजिनाञ्चोद्गीथ-
विद्यायां ऐक्यम्पूर्वपक्षीकृत्य निरस्य संज्ञात ऐक्यमाशङ्क्यो-

(Margin line numbers: ६५५, ६६०, ६६५, ६७०)

१७५ क्तम् "संज्ञातश्चेत्तदुक्तमस्ति तु तदपि" इति, संज्ञैक्येऽपि भेद उक्तः, यथा "प्रकरणान्तरे प्रयोजनान्यत्वम्" इत्यत्र नैयमिकमासाग्निहोत्रयोरित्यर्थः. "अक्षरधियान्त्ववरोधस्सा-मान्यतद्भावाभ्यामौपसदवत्तदुक्तम्", "यत्तदद्रेश्यमग्राह्यम्" इत्याद्युक्तास्थूलत्वादिविषयाणामक्षरधियां सर्वत्रावरोधः, स-
१८० र्वत्र ब्रह्मण एकत्वात्तैर्विना इतरव्यावृत्तब्रह्मानुसन्धनानुप-पत्तेश्च, अतः प्रधानब्रह्मानुसन्धाने तद्गुणानामप्यवरोधः, औपसदवत्, जामदग्न्यचतूरात्रे पुरोडाशुपसद्गुणभूतस्य-मन्त्रस्योपसदनुवर्तित्वेनोपांशुगुणत्वमुक्तम् "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग" इत्यत्रेति. "प्रदानवदेव तदुक्तम्"
१८५ दहरविद्यायामपहतपाप्मत्वादिगुणविशिष्टोपासने तत्तद्गुण-विशिष्टस्वरूपभेदात्प्रतिगुणङ्गुणावृत्तिः, यथा "इन्द्राय राज्ञे" इत्यादिषु विशिष्टस्वरूपभेदात्प्रदानावृत्तिः, तदुक्तं सङ्कर्षे "नाना वा देवता पृथक्त्वात्" इति, "इन्द्राय राज्ञे पुरोडाशमेकादशकपालन्निर्वपेदिन्द्रायाधिराजाये-
१९० न्द्राय स्वराज्ञे" इति विहितायान्त्रिपुरोडाशिन्यामिष्टौ हविर्भेदाद्भेदेनावदानप्राप्तौ, "वचनात्सर्वेषां सहावदीयेरन्" इति सूत्रेण "सर्वेषामभिगमयन्नवद्यति" इति वचनात्स-हावदाने स्थापिते ततोऽवदानसाहित्यात्प्रदानसाहित्यम् "तेषां सहप्रदानमवदानैकत्वात्" इति सूत्रेण पूर्वपक्षीकृत्य,
१९५ "नाना वा देवता पृथक्त्वात्" इति अधिराजत्वादिविशिष्ट-देवताभेदात्प्रदानस्यानैवेत्युक्तमित्यर्थः. साक्षादिति, "स

एषोऽग्निर्वैश्वानरः" इत्यग्निशब्दसामानाधिकरण्यम्परमात्मवाचिनो वैश्वानरशब्दस्य परमात्मनोऽग्निशरीरकतयोपास्यत्वायेत्युक्तम्भावश्यमेव, अग्रनयनादियोगेन परमात्मन्येवाग्नि-
७०० शब्दस्य साक्षाद्वृत्तेस्तत्सामानाधिकरण्याविरोधं जैमिनिर्मन्यत इत्यर्थः. सम्पत्तेरिति, "लोमानि बर्हिर्हृदयङ्गार्हपत्य" इत्यादिनोपासकहृदयादीनां यद्वैश्वानरविद्यायां वेदित्वादिकल्पनन्तद्विद्याङ्गभूतायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनार्थम्, दर्शयति च श्रुतिः, "य एतदेवं विद्वानग्नि-
७०५ होत्रञ्जुहोति" इति. अन्यार्थन्त्विति, "तौ ह सुप्तम्पुरुषमाजग्मतुः" इत्यादौ यद्देहातिरिक्तजीवसद्भावप्रतिबोधनम् "यो वै बालाक एतेषाम्पुरुषाणाङ्कर्ता यस्य चैतत्कर्म स वै वेदितव्यः" इति वेद्यतयोक्तब्रह्मप्रतिबोधनार्थमिति, "क्वैष एतद्बालाके पुरुषोऽशयिष्ट" इति प्रश्नात्, "अथास्मिन्प्राण
७१० एवैकधा भवति" इति "सता सोम्य" इत्यादिवाक्यसमानार्थात्प्रतिवचनाच्च अवगम्यते. एके-वाजसनेयिनोऽपि एतत्प्रतिवचनसमानार्थं वाक्यं स्पष्टमधीयते "क्वैष एत"दित्यादि"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इत्यन्तम्.
तद्भूतस्य त्विति, तद्भूतस्य नैष्ठिकाद्याश्रमम्प्राप्तस्य नातद्भावः
७१५ अतद्भावः-अतथाभावः अनाश्रमित्वेनावस्थानम् न सम्भवति, कुतः, तद्रूपेत्यादि, तेषां नैष्ठिकवैखानसपरिव्राजकानां रूपाणि धर्माः तन्निवृत्तिभ्यो नियमात् "ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमवसादयन्" इति "अरण्य-

मियात्ततो न पुनरेयात्" इति "नचास्मादावर्तते पुनरावर्तयेत्" इति च शास्त्राणि हि नियच्छन्ति जैमिनेरप्येवमतमिति. उत्पत्तिर्जन्मस्वभावः, औत्पत्तिकः-नित्य इति यावत्, नित्यश्शब्दार्थसम्बन्धः-न साङ्केतिकः, येन प्रमाणं स्यात्, नित्यत्वात्तस्य— धर्मस्य उपदेशो ज्ञानं-ज्ञापकः, तच्च ज्ञानस्य व्यतिरेकः-न विपर्ययः, संशयस्याप्युपलक्षणमेतत्, तथानुपलब्धेऽर्थे प्रवर्तमानत्वान्नानुवादकोऽपि, तस्मादनपेक्षत्वादनधिगतार्थबोधकत्वाच्चोदना धर्मे प्रमाणम्भवत्येव बादरायणस्याचार्यस्य मतेनेति सूत्रार्थः. स्वाचार्यमिति, तथाच स्वाचार्यभूतब्रह्मसूत्रकृत्पुरस्कारेण प्रवर्तमाने जैमिनीये शास्त्रे न तद्विरुद्धाभिधानमित्यर्थः. नन्वाचार्यत्वात्र ब्रह्मसूत्रकृत्पुरस्कारः, तत्र मानाभावात्, किन्तु ऐतिशायनादिवत्तद्ग्रहणङ्क्वचित्सम्मतिमात्रात्, अतोऽन्यत्र तद्विरुद्धाभिधाने नानुपपत्तिरित्यत आह जैमिनेरिति. नन्वत्रेति, न व्यास एव बादरायणः, बादरायणशब्दस्य ऐतिशायनादिवदपत्यप्रत्ययान्तत्वेन बादरिशब्दाद्व्युत्पन्नत्वादिति भावः. द्वीप इति, अनेन बदराणां समूहो बादरम् तदयनं यस्य स बादरायण इति व्युत्पत्तिस्सूचिता, संज्ञात्वाच्च "पूर्वपदात्" इत्यादिना णत्वमिति भावः. व्यासेति, तथाच कतरो बादरायणस्सूत्रकार इत्यनिर्धारणमिति. भावः. तथापीत्यादि, लोके ज्ञानपदस्य कर्मणि व्युत्पत्त्या वेदनशब्दस्य च णिजन्तनिष्पन्नतया व्यासस्य रहस्यतमार्थख्या-

पकत्वप्रतीतेः रहस्यतमार्थोपदेशरूपब्रह्मसूत्रकर्तृत्वस्यैव युक्त-
मित्यर्थः. "अवतीर्णो महायोगी सत्यवत्याम्पराशरात्"।
इत्यारभ्य "चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा",॥
इत्यादिस्कान्दवचनादिकष्ठोक्तिरादिशब्दार्थः. ननु जैमि-
७४५ नीयसूत्राणान्देवतानिराकरणपरतया तद्व्याख्यातृभिर्व्याख्या-
तत्वाद्देवतासद्भावादौ तात्पर्याभावात्तदभिप्रायापरिज्ञाना-
देव वेदान्ते तथा तथा जैमिनिमतोपन्यास इत्यत्राह
न हीति, आचार्यबादरायणशब्दाभ्याममभिप्रायापरिज्ञाना-
योगे हेतुरुच्यते. अत इति, व्याख्येयैक्यात्प्रथमतस्सामा-
७५० न्येन वेदार्थनिर्णयोद्देशेनैव विचारशास्त्रचिकीर्षोदयस्य युक्त-
त्वात् परस्परविरोधाभावाच्चेत्यर्थः. प्रतिबन्दीमुखेन साध-
यितुं शङ्कते नन्विति. किं वेति, ऐकशास्त्र्य इत्यैक-
प्रबन्ध्यस्याप्युपलक्षणम्. क्रमेत्यादि, सङ्गतिविशेषविशिष्टत्व-
मैकप्रबन्ध्ये हेतुः, उत्तरांशश्शास्त्रैक्ये हेतुः. शास्त्रान्त-
७५५ रेति, न्यायविस्तरादिविद्यास्थानान्तरसाध्यविलक्षणकर्मभा-
गतात्पर्यनिर्णयरूपोपकारजननार्हत्वात्कर्ममीमांसाया इति
भावः. इदञ्च वेदार्थानुबन्ध्यर्थकत्वेन सर्वेषामैकशास्त्र्यं वार-
यितुमुक्तम्, अवान्तरार्थाविरोधस्याप्यैकशास्त्र्यापेक्षितत्वाद्-
क्रमविरुद्धावान्तरार्थेति शास्त्रविशेषणम्. किम्प्रमाणम्—
७६० कस्य प्रमाणम्, किं विंशतिलक्षणैकशास्त्र्यस्य, किं वा द्वाद-
शाध्याय्यादिमात्रैकशास्त्र्यस्य, इति निरूपयेत्यर्थः. वेदार्थ-
निर्णयरूपैकोपकारार्हताया विंशतिलक्षणीसाधारण्यात्तदैक्य

एव तत्प्रमाणम्भवेदिति भावः . न च कर्मब्रह्मनिर्णयरूपो-
पकारयोर्भेदाद्भेद इति वाच्यम्, कृत्स्नवेदाध्यायिनः कृत्स्ना-
७६५ पातप्रतीतिमतो वेदार्थमात्रे निर्णिनीषोदयाद्वेदार्थनिर्णय-
त्वस्यैवेष्टतावच्छेदकत्वात् तदनुग्रहार्थशास्त्रस्यापि तदिष्टता-
वच्छेदकावच्छिन्नोद्देशेन प्रवृत्तेर्युक्तत्वात्, यावत एकेष्टताव-
च्छेदकावच्छिन्नोपकारजननार्हता तावत एकशास्त्रत्वात्, अत
एव मीमांसेत्येकतया विद्यास्थानगणने परिगणनम्, तस्यो-
७७० क्तप्रयोजकानुरोधित्वदर्शनात्, अन्यथा प्रतिषट्कमत्यध्याय-
मतिपादमत्यधिकरणञ्च भेदप्रसङ्गात्, यदाह कश्चित्पा-
रिप्लवमतिः, किङ्कर्मब्रह्ममीमांसयोरेकग्रन्थत्वम्पूर्वोत्तरशास्त्र-
मिति व्यवहारमात्रात्, किं वोपजीव्योपजीवित्वे सति
विषयाद्यैक्यात्, यद्वा एकेनैवाध्ययनविधिना तदुत्थरागेण वा
७७५ कर्मब्रह्मपरकृत्स्नवेदविचारस्यैव प्रयुक्तत्वेनैकदेशविचारे विधे
रागस्य वाऽभावात्, किं वा जयादित्य वामनवृत्त्योरिव कर्तृ-
भेदेऽपि व्याख्येयैक्यात्, यद्वा प्रबन्धान्तर इवैकप्रबन्धत्वव्यव-
हारात् . नाद्यः, ऐकशास्त्र्यहेतोः पूर्वोत्तरभागव्यवहार-
स्यात्राभावात्, पूर्वोत्तरशास्त्रव्यवहारस्य च भिन्नयोश्शास्त्रयोः
७८० पूर्वापरीभावमात्रेणोपपत्तेः, द्वितीये ब्रह्ममीमांसायाः कर्म-
मीमांसोपजीवित्वङ्किन्नित्यफलार्थिनः पुंसो ब्रह्मभागविचारे
प्रवृत्त्यर्थस्य तत्प्रामाण्यनिश्चयस्य वा ब्रह्मज्ञानकर्मफले नित्या-
नित्ये इति विवेकस्य वा कर्मफलानित्यत्वनिश्चयविशिष्टस्य
ब्रह्मज्ञानफलनित्यत्वापातप्रत्ययस्य वा कर्मविचाराधीनत्वात्,

७८५ किं वा ब्रह्मभागविचारे प्रवृत्तस्य तदर्थनिश्चयार्थश्रुतिलिङ्गा-
दिबलाबलादौ कर्मविचारापेक्षणात्, यद्वा ब्रह्म निश्चित्य
तन्निदिध्यासने प्रवृत्तस्य निदिध्यासनाङ्गकर्मानुष्ठाने कर्म-
विचारापेक्षणात्. नाद्यः, वेदप्रामाण्यस्य ब्रह्मतर्काख्यतर्क-
शास्त्रसिद्धस्य वा ब्रह्ममीमांसायामेवास्मन्मते "न विलक्षण-
७९० त्वा"दित्यत्र त्वन्मते च "अत एव च नित्यत्व"मित्यत्र वक्ष्य-
माणस्य वा पूर्वतन्त्रे वक्ष्यमाणस्य त्रैवर्णिकाधिकारस्येवोप-
जीवनात्, नित्यानित्यविवेकस्य च त्वन्मते ब्रह्मविचारप्रवृत्त्य-
हेतुत्वात्, कर्मविचारं विनाप्यस्मद्रीत्या तत्सिद्धेश्च, विशि-
ष्टापातप्रत्ययस्य च ब्रह्मज्ञानफलनित्यत्वापातप्रतीतिमात्रेण
७९५ नित्यफलार्थिनस्तत्र प्रवृत्तिवत्कर्मफलानित्यत्वापातप्रतीति-
मात्रेण ततो निवृत्तेरुपपत्तौ विशेषणस्य कर्मफलानित्यत्व-
निश्चयस्यानपेक्षिततया कर्मत्यागेन ब्रह्मविचारे प्रवृत्त्यहेतु-
त्वात्. न द्वितीयः, श्रुतिलिङ्गादिबलाबलादेरुपक्रमोप-
संहार बलाबलादेरिव ब्रह्मतर्कसिद्धस्य लोकसिद्धस्य वोप-
८०० जीवनात्. न तृतीयः, ब्रह्मविचारानन्तरं निदिध्यासनात्प्रा-
क्कर्मविचारोपपत्तेः. नापि मीमांसयोर्विषयाद्यैक्यम्, सिद्ध-
साध्यविषयत्वात्, नित्यानित्यमोक्षाभ्युदयफलत्वात्, विराग-
सरागाधिकारिकत्वाच्च, वेदार्थत्वालौकिकपुरुषार्थत्वतदर्थि-
त्वैर्विषयाद्यैक्ये च अर्थकामशास्त्रयोरपि शास्त्रार्थत्वपुरु-
८०५ षार्थत्वतदर्थित्वैर्मोक्षशास्त्रादिना विषयाद्यैक्यं स्यात्. न
तृतीयः, षडङ्गो वेदोऽध्येतव्य इत्येकेनैव विधिना तदुत्य-

रागेण वा व्याकरणाद्यङ्गविचारस्यापि प्रयुक्तत्वेन केवलवेद-
विचारे विधेरागस्य वा अभावेन व्याकरणादिविचाररूप-
महाभाष्यादेर्वेदविचाररूपमीमांसैकशास्त्यापातात्, इहैव
८१० कर्मकाण्डस्यापि ब्रह्मपरतया विचारितत्वेन एकदेशविचा-
राभावाच्च . चतुर्थे व्याख्येयैक्यम् न तावद्वेदत्वादिनैक्यमात्रं,
व्याख्यानेऽपि प्रबन्धभेदे सत्यपि वेदव्याख्यानत्वादिनैक्य-
सिद्धिप्रसङ्गात्, नापि पूर्वापरीभूतैकप्रबन्धत्वम्, व्याख्यान-
स्यैकप्रबन्धत्वे हि न तावद्व्याख्येयैक्यमात्रं हेतुः, वैदिकप-
८१५ दार्थनिर्णायकयोर्निरुक्त व्याकरणयोरिवैकप्रबन्धव्याख्यानयोः
प्रस्थानयोरिव च प्रबन्धभेदेऽपि तदुपपत्तेः, नाप्येकप्रबन्ध-
पूर्वापरभागव्याख्यानत्वं हेतुः, असिद्धेः, तथा हि, तत्त-
च्छाखासंहितारण्यकभागयोः पूर्वापरतया न पूर्वापरभाग-
व्याख्यानता, एकशाखासंहितारण्यकयोः क्रमेण व्याख्याना-
८२० नन्तरं शाखान्तरसंहितारण्यकव्याख्यानरूपत्वाभावात्, अतः
कर्मब्रह्मपरसमुदायरूपेण पूर्वापरभागता तद्व्याख्यानरूप-
तया पूर्वापरभागव्याख्यानता वाच्या, समुदाययोस्तु पूर्वा-
परभावो न क्लृप्तः, नापि कल्प्यः तत्तच्छाखीयसंहिता-
रण्यकयोरध्ययनसिद्धक्रमबाधित्वा कल्पनाऽसम्भवात्, नापि
८२५ तत्तच्छाखास्थसंहितारण्यकयोः पूर्वापरीभावमात्रेण तत्समु-
दाययोस्तत्सिद्धिः, ब्रह्मसूत्रव्याकरणसूत्रादौ प्रथमपादसमु-
दायस्य द्वितीयपादसमुदायस्य च पौर्वापर्यप्रसङ्गात्, यदि
च विप्रकीर्णकर्मब्रह्मभागौ बुद्ध्या पूर्वापरीभावेन विविच्य

मीमांसयोः प्रवृत्तिः, तर्हि वेदार्थविचारत्वोपाधिना अप्र-
८३० वृत्तेः प्रयोजनभेदमभिसन्धाय कर्मब्रह्मविचारत्वोपाधिनैव
प्रवृत्तेर्नैकशास्त्रता, तस्मान्न मीमांसयोः पूर्वापरभागव्याख्या-
नत्वम्. अस्तुवातत्, तथापि कर्मब्रह्मकाण्डार्थनिर्णायकयो-
स्स्मृतिपुराणयोरिव भिन्नप्रबन्धतास्तु. न पञ्चमः, उत्तर-
षट्काद्याद्यध्यायेषु पूर्वषट्काद्याध्यायमपेक्ष्य सप्तमादिव्यवहारवत्
८३५ देवताकाण्डब्रह्मकाण्डाद्याद्यध्यायेषु कर्ममीमांसाद्याध्यायम-
पेक्ष्य त्रयोदशसप्तदशादिव्यवहारस्य द्वितीयभागतृतीय-
भागप्रथमादिव्यवहारस्य वा अभावात्, देवताविग्रहादि-
निरास तत्समर्थनाभ्यामर्थविरोधाच्च न मीमांसयोरैक्यम्,
तन्निरासः कर्मण्यश्रद्धावारणार्थं इति चेत्, सत्येव ब्रह्मणि
८४० तज्ज्ञान इव सत्यामपि देवतायामाश्वाससम्भवात्, पौरुषे-
यत्वाद्वेदाप्रामाण्यमाशङ्कीति तन्निरास इति चेत्,
सत्यामपि देवतायान्तदकृतत्वमात्रेणापौरुषेयत्वात्. किञ्च
"मध्वादिष्वसम्भवात्" "शेषत्वात्पुरुषार्थवादः" इत्यादिषु
जैमिनिमतस्य पूर्वपक्षितत्वात्कथमविरोधः, न चातन्मत-
८४५ त्तन्मतमिति वक्तुं युक्तम्; किञ्च यदि शास्त्रैक्यन्तदा
आदौ वेदार्थजिज्ञासेति साधारणी प्रतिज्ञा स्यात्, न च
ब्रह्मजिज्ञासेत्येव साधारणीप्रतिज्ञा, कर्मविचारस्तु ब्रह्म-
मीमांसाचतुर्थपादे सङ्गत इति वाच्यम्, तथा सति ब्रह्म-
जिज्ञासायाः कर्मविचारानन्तर्योक्त्यसम्भवात्, कर्मब्रह्म-
८५० मीमांसाप्रतिज्ञाभ्यामेव साधारणी प्रतिज्ञार्थसिद्धेत्यपि न,

शारिप्सितशास्त्रविषयादिसूचनाय साधारण्यैवादौ साक्षा-
त्प्रतिज्ञेयत्वात् . ननु धर्मजिज्ञासेत्येव साधारणी प्रतिज्ञा,
अलौकिकश्रेयस्साधनन्धर्मः, स च सिद्धस्साध्यस्र, साध्यो
यागादिः, सिद्धो ब्रह्म, "कृष्णन्धर्मं सनातनम्" ॥ इति
८५५ भारतोक्तेरिति चेन्न, तथात्वे देवब्रह्ममीमांसयोर्धर्ममीमां-
सेति व्यवहारापातात्, प्रतिज्ञातधर्मसामान्यस्यैवानन्तरं
लक्षणीयत्वेन "चोदना लक्षणोऽर्थो धर्म" इति विशेष-
लक्षणायोगाच्च, तत्र चोदनाशब्दस्य वेदमात्रपरत्वे पुन-
र्ब्रह्ममीमांसायां शास्त्रयोनिसूत्रवैयर्थ्यम्, "कृष्णन्धर्ममि"ति
८६० तु धारणाद्धर्म इति वचनाद्यौगिकः, अन्यथा, "पातना-
त्पापनामासौ पुनातेः पुण्यनामवान्"। "परमं यो मह-
त्तपः"। इति वचनात् पापत्वाद्यपि स्यात्, देवताकाण्डार्थ
देवतायाश्च न क्वचिद्धर्मशब्दो दृष्ट इति . तदेतत्सर्वमाचार्य-
सूक्त्यश्रवणहेतु दौर्भाग्यनिबन्धनम् . तथा हि, "ऐकशा-
८६५ स्त्यञ्च भागद्वयात्मकवेदार्थैकप्रबन्धव्याख्यानरूपत्वात्" इत्या-
दिना व्याख्येयैक्यमेव शास्त्रैक्ये हेतुतयाऽनुगृहीतमाचार्यैः .
"अस्त्वेकशास्त्र्यङ्कथम्पौर्वापर्यनियम इति शङ्काम्परिहरन्"
इत्यादिना उपजीव्योपजीवकभावादि क्रमनियामकत्वेनैवानु-
गृहीतम्, एवं सति विकल्पसम्भ्रम आहोपुरुषिका-
८७० मात्रम् . यदुक्तङ्कर्मफलानित्यत्वापातप्रतीतिमात्रेण । ततो
निवृत्त्युपपत्तौ कर्मफलानित्यत्वनिश्चयो नापेक्षित इति,
तन्न, "स्वाध्यायाध्ययनेन कर्मब्रह्मज्ञानयोरुभयोरप्यापातप्रतीतौ

अधीतक्रमेण कर्म विचार्य कर्मणामनित्यफलत्वनिश्चयाद्यदि नित्यफलङ्केन चिह्नवति तदा तन्मयानुष्ठेयमिति ज्ञानवतो
८७५ ब्रह्मज्ञानस्य नित्यफलत्वसम्भावनया तद्विचारे प्रवृत्तिः" इति ह्याचार्यैरनुगृहीतम्, अत्रास्य कुचोद्यस्यावकाशा-भावात्. यदि कर्मण्यपि नित्यफलसम्भावना, तदा यदि नित्यफलङ्किञ्चित्स्यात्तदा तन्मयाऽनुष्ठेयमिति बुद्धिमतः कर्मणो नित्यत्वसम्भवेन अनित्यफलत्वनिश्चयस्यैव केवल-
८८० कर्मणो निवर्त्तकत्वात्. यच्चोपजीव्यविकल्पेषु तृतीय विकल्पदूषणम् तच्चैकशास्त्र्यहेतुतया विकल्प्य तेन क्रमा-सम्भवदूषणोक्तेरुपहास्यम्. अस्त्वनेनैकशास्त्र्यं तथापि क्रमो न सम्भवतीत्यभिप्रायेण तथोक्तमिति चेन्न, तेनैक्यं यदि सिध्यति तदा स्वाध्यायाधीति क्रमाद्व्याख्याननियमसिद्धेः.
८८५ यच्च विषयाद्यैक्यदूषणं तदपि पूर्वोक्तप्रमाणाभ्यामैकशास्त्र्ये सिद्धे ग्रन्थोक्तप्रकारेण विषयाद्यैक्यस्यं निष्प्रत्यूहत्वान्निरस्तम्. किञ्च पूर्वोत्तरभागात्मिकाया एकैकशाखाया एकैकग्रन्थ-त्वात्तत्रं च विषयाद्यैक्यस्यावश्यिकत्वे तद्व्याख्यानस्यापि तदेव त्रिषयादिकमिति कथन्न विषयाद्यैक्यम्. न च कर्म-
८९० ब्रह्मादिरूपविषयादिभेदादेकशाखायामपि कर्मब्रह्मभागयो-र्भिन्नग्रन्थता, तथा सत्येकस्मिन्नेवानुवाके नानाकर्मणाम्भिन्न-फलानाम्प्रतिपादनात्तत्चापि तत्तत्कर्मप्रतिपादकानां वाक्या-नाम्नानाग्रन्थत्वप्रसङ्गात्. यदुक्तं व्याकरणाद्यङ्गविचारोऽप्येक-विध्युद्धरांगसंयुक्त इति, तन्न. स्वाध्यायापातप्रतीतेरेव

८९५ व्याकरणविचारसाध्यतया स्वाध्यायापातप्रतीति प्रयुक्तविचा-
रारागस्य व्याकरणविषयत्वासिद्धेः . यदुक्तमेकदेशविचारा-
भावादिति, तन्न . इहैव कर्मकाण्डस्य ब्रह्मपरतया विचा-
रितत्वेऽपि सहस्राधिकरणनिवर्त्यसंशय निवर्तकविचारस्य
ब्रह्मविचारेणासिद्धेः . किञ्चिद्विचारमात्रेणास्य कर्मविचा-
९०० रत्वे वेद प्रामाण्यविचार एव ब्रह्मविचारस्स्यात् . यदुक्तं
वेदार्थविचारत्वोपाधिना अप्रवृत्तेः प्रयोजनभेदमभिसन्धाय
कर्मब्रह्मविचारत्वोपाधिनैव प्रवृत्तेर्नैकशास्त्रतेति, तन्न, अव-
यवप्रयोजनभेदाभिसन्धेरवयवि प्रयोजनाभिसन्ध्यविरोधि-
त्वात् . अन्यथा षड्ाध्यायपादपेटिकाधिकरणभेदैश्शास्त्र-
९०५ भेदप्रसङ्गात् . यच्च देवतानिराकरणस्य कर्मण्यश्रद्धावार-
णार्थत्वे दूषणोद्भावनं तदश्रुत वेदान्तानामित्याचार्यानुगृ-
हीतपदाश्रवणनिबन्धनम्, तदनुग्रहस्त्वायम्भावः, देवताना-
म्प्रलये विनाशात् तत्प्राचीनकर्मणां फलाभावप्रसङ्गात् अन-
न्तरसर्गेऽकृताभ्यागमप्रसङ्गात् इन्द्रस्येन्द्रयजनश्रवणेन स्वस्यैव
९१० स्वस्मै फलप्रदत्वविरोधाच्च कर्मण्यश्रुतवेदान्तानामश्रद्धा स्यात्,
श्रुतवेदान्तानान्तु तदन्तर्यामिणः परमात्मन एव फलप्रदत्वा-
ध्यवसायात्कर्मणि नाश्रद्धा स्यात् इति . तस्मादश्रुतवेदा-
न्तानाङ्कर्मण्यश्रद्धावारणार्थमन्वारुह्यवादेन देवतानिराकरणं
युज्यत एवेति . यच्चातन्मतन्तन्मतमिति वक्तुमशक्यमिति,
९१५ तदप्याचार्यैरेव परिहृतम्, तन्मतत्वेनोपन्यासनिरासः
तदुक्ततया तत्र तत्त्वबुद्धिर्मन्दमतीनाम्माभूदिति, अतन्मत-

त्वञ्च भारतादेव ज्ञायत इत्याचार्यैरेवोक्तम्, षष्ठिव्यस्य च जैमिनेर्न भगवद्व्यासाचार्यमतिविरुद्धमतिसम्भवः, तस्मादैक-शास्त्र्यमनङ्गीकुर्वताप्यन्वारुह्यवादेनैव जैमिनिना देवता-

९२० निराकरणमित्यङ्गीकार्यम्, ब्रह्मजिज्ञासेत्येव साधारणार्थ-प्रतिज्ञेत्याचार्यसूक्तितात्पर्यम्प्रागेवोपपादितम्, धर्मजिज्ञासा-सूत्रस्य साधारणप्रतिज्ञात्वं चोपपादितमिति .

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगत-परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्र-सादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायाञ्चण्डमारुताख्यायां शास्त्रभेदभङ्गो नाम तृतीय स्कन्धः .

---

श्रीमते महाचार्याय नमः ।

शतदूषणीव्याख्याने चण्डमारुते

## अविधेयज्ञानवादभङ्गश्चतुर्थस्स्कन्धः ।



उद्धृत्य निगमान्तसागरतलस्पर्शीनि तत्त्वान्यसौ सासूयप्रतिवादिदर्शनसिराममर्माणि भिन्दन्निव । वेदान्तार्यवचः प्रसाधनपटुव्याख्यानमुद्रः करस्त्विन्ते भातु वधूलसन्ततिपरिष्कारस्य कस्यापि नः ॥

५ **विधिवचस्तै**रिति, विधेयत्वे अदृष्टद्वारा निवर्त्तकत्वप्रसङ्गेन तन्निवर्त्यस्य सत्यत्वप्रसङ्गो विधित्वासहेतुः . **अविधेये**ति, अपरिचितश्रुति मार्गैरित्यर्थः, तेन यागादिशब्दार्थेऽपि मौढ्यं व्यज्यते, यत्तदित्यत्र तच्छब्दः प्रसिद्धिपरः . **नमस्याम**स्याम इति, नमस्याम्प्रयुञ्ज्महे इत्यर्थः . यद्वा नमस्याम इति छेदः, १० यतिपरिहृढाय स्यामः, तन्नमस्याम इत्यध्याहारेण योजना . **प्रतिकल्प**मिति, दुरर्थप्रलापोद्भूतनदशासु सम्यगर्थोपदेशदशासु चेत्यर्थः . तेन तत्कृतोपकार स्मृतिर्नमस्या हेतुरित्युक्तम्भवति . सविशेषब्रह्मव्यावृत्त्यर्थम् **संविन्मात्र** इति . "ब्रह्मवेद ब्रह्मैव भवति" इत्याद्यभिप्रायेण **परस्मिन्ब्रह्मणी**ति . १५ केनापि-पुरुषेणेत्यर्थः . **अनारोपित**त्वाभिमतेति, लौकिका-

नामभिमतिर्विवक्षिता, तेन व्यावहारिकत्वं विवक्षितम् **भ्रान्तेरिति,** भ्रान्तिसिद्धार्थस्याप्युपलक्षणम्. **न चेति,** दोषः अविद्या, भक्षितः-जीर्णः. **तथाविधत्वे**ति, व्यावहारिकत्व-बोधनाय, मिथ्यात्वे तात्पर्यम्. ज्ञानस्यैवं तर्हि विधान-

२० मस्त्वित्यत्राह **न च ज्ञानमिति**. श्रान्यावेक्षणादिविधीनान्त-त्साधनपरत्वाभिप्रायेणाह **स्वरूपेणेति**. कथन्तर्हि द्रष्टव्य इति विधिरित्यत्राह **अतएवेति**. ननु तर्हि श्रोतव्यादि-वाक्यानामपि ज्ञानविषयाणां विधिपरत्वासम्भवात् वैयर्थ्यमेव स्यादित्यत्राह **तदर्थत**येति, ज्ञानार्थतयेत्यर्थः, ज्ञानार्था-

२५ ऽयम्वेतो वृत्तिविशेषः, न तु स्वयं ज्ञानमिति भावः. यदा यद्यविधेयात् ज्ञानादेव बन्धनिवृत्तिः, न तु विहितात्, तदा श्रवणादिविधानं व्यर्थमित्यत्राह **तदर्थतये**ति, दर्शनरूप-फलार्थतयेत्यर्थः. वाक्यजन्यज्ञाने वाक्यमेव ह्यपेक्ष्यते, न पुन-श्श्रवणमित्यत्राह **तादर्थ्यञ्चे**ति. ननु श्रवणादीनां सर्वेषा-

३० मपि प्रकरणेन मोक्षार्थता अविशिष्टा, वाक्यतस्तु ज्ञानस्यापी-त्यत्राह **ब्रह्मवेदेति**. एवमपि ज्ञानस्य स्वरूपेण विधातुम-शक्यत्वङ्कुत इत्यत्राह **न चास्येति,** प्रमाणपरतन्त्रस्य ज्ञानस्य न विधेयता, विध्यभावे तदप्राप्तौ हि विधिः स्यादित्यर्थः. **विस्रम्भमिति,** विस्रम्भयोग्यतानुद्यत इति भावः. **मिथ्या-**

३५ **भूताना**मिति, ततश्च विश्वमिथ्यात्वज्ञानेन निवृत्तिसम्भवेऽपि तन्निवृत्त्यर्थतयान्यस्यापि विधानमविरुद्धमिति भावः. **प्रयो-जके**ति, ब्रह्मातिरिक्तत्वेन मिथ्यात्वोपदेशजन्यज्ञानादेवेत्यर्थः

तदभावात्— आभिप्रायिको दोषस्तच्छब्देन गृह्यते . **तत्परिग्रह** इति, परिग्रहः-कल्पना . **येनेति,** अनेन व्यभिचारः
४० स्वप्रवृत्तिविरोधश्चोक्तः . बाधितानुवृत्त्यादिभिस्तदुपपादनेऽपि अननुवृत्त्यर्थमपि भेषजपानवदविद्याऽननुवृत्त्यर्थमेव साधनान्तरविधानं सम्भवतीत्याशयः . **न प्रथम** इति, भाव्यपदेन साध्यत्वं विवक्षितम् . कादचित्केत्यत्र पूर्वार्धमिहोपजीव्यम् . यदा भाव्यत्वं साक्षात्परम्परोदासीन्येन कृतिसाध्यत्वम्
४५ भव्यत्वञ्च . **करणाधीन**तयेति, केषाञ्चिज्ज्ञानानां पुरुषप्रयत्नाधीनकरणजन्यत्वदर्शनेन भाव्यत्वसिद्धिरित्यर्थः . सिद्धे हि क(का)रणाधीनत्वे तत्प्रयोजकप्रयत्नाधीनता स्यात्, तदेव नेत्याह **तस्येति . भावार्थत**येति, बुद्धेर्धात्वर्थतया पाणिनीय स्मरणादित्यर्थः . वृत्तिरेव भावार्थः . आत्मस्वरूपभूतन्तु
५० ज्ञानमभावार्थत्वादविधेयमेवेत्यत्राह **आत्मेति,** अस्माभिरपि स्वरूपभूतज्ञानस्य विधानमेष्यत इत्यर्थः . **लोक इति,** दृष्टार्थभोजने प्रयतेतेत्यादाविष्टसाधनत्वबोधनरूपविधानस्य दर्शनादित्यर्थः . **भावा(र्था)न्तराणामिति,** पुरुषशब्देनात्मविवक्षायामक्षेपादेर्विधेयता न स्यात्, शरीरपरत्वे तु त्यागादे-
५५ र्विधेयता न स्यात् . **अनुप्रवेश** इति, केनेत्यंशानुप्रवेश इत्यर्थः . **कुतश्चिदिति,** प्रमाणादित्यर्थः . ननु श्रवणादीनाञ्च ज्ञानत्वम् परोक्षापरोक्षज्ञाने क्लृप्तकारणाजन्यत्वात्, किन्तु ज्ञानाभासः पदार्थान्तरम्, अन्तःकरणसमवेतं ज्ञानं सुखाद्यष्टगुणातिरिक्तान्तःकरणविशेषगुणभिन्नम्, पदार्थत्वात्,

६० सुखादिवत्, न चाप्रयोजकत्वम्, प्रत्यक्षसिद्धाया• वृत्तेः क्लृप्त-
कारणाजन्यत्वेन ज्ञानत्वायोगात् . न च तस्मिन्मनः करण-
मिति वाच्यम्, मनसः प्रमाश्रयत्वेन तदकरणत्वात्, अतः
इन्द्रियादिवत् ज्ञानार्थत्वान्न ज्ञानमिति शङ्कते **ननु न**
**तानीति . तदर्थत्व** इति, अयम्भावः श्रवणादीनां ज्ञान-
६५ त्वन्तावदनुभवसिद्धम्, ध्याने तु विद्युपास्योर्व्यतिकरेणोपक्रमो-
पसंहारदर्शनेनापि ज्ञानत्वमवगम्यते . न चान्यत्र क्लृप्तकारण-
विरहादज्ञानत्वम्, ज्ञानत्वे प्रामाणिके सिद्धे सत्यन्यत्र क्लृप्त-
कारणाभावेऽपि सामग्र्यन्तरस्यैव कल्प्यत्वात् . अन्यथा प्रत्यक्षे
क्लृप्तकारणविरहादनुमितेरप्यज्ञानत्वप्रसङ्गात्, स्वभावतस्तु मनस
७० एव (क)कारणत्वान्नान्यत्र क्लृप्तकारणविरहः . न च मनसः
प्रमाश्रयत्वमेवेति वाच्यम्, आत्मन एव ज्ञानाश्रयतया मनसः
(क)कारणत्वसाधनात् . किञ्च निदिध्यासनन्तावत् अविच्छि-
न्नस्मृतिसन्तानः, ध्यानानन्तरम् एतावन्तङ्कालम्भगवन्तमस्मार्ष-
मिति प्रयोगानुभवदर्शनात्, ध्याने "ध्रुवा स्मृति"रित्यादिश्रौत-
७५ प्रयोगाच्च, स्मृतेश्च ज्ञानत्वन्तवापीष्टम्, अतस्संस्कारादेस्सत्त्वान्ना
न्यत्र क्लृप्तकारणविरहः . अतएवानुभवप्रयोगदर्शनात् दृष्ट्युपा-
सनस्याप्याहार्यारोपसन्तानात्मकस्य ज्ञानत्वं सिद्धम् . मननमपि
युक्तिभिरेवमेवैतदिति व्यवसायः, तच्च ज्ञानमेव, "मनु अव-
बोधने" इति धातोर्निष्पन्नत्वात् . श्रवणमपि शाब्दज्ञान-
८० विशेष एव, तत्रैव स्वारस्यात् . श्रवणमननयोर्निरुक्त हेतु-
भूत व्यापारत्वेऽपि व्याप्तिसहचारलाघवोपक्रमादिप्रतिसन्धा-

नातिरिक्तस्य मनोव्यापारस्यादर्शनात्, तेषाञ्च ज्ञानरूपत्वात् ज्ञानविधिस्तवाप्यवर्जनीयः. यदप्युच्यते, ज्ञानस्य वस्तुनः कृतिव्यभिचारात्कृतिसाध्यत्वाभावाच्च विधेयत्वमिति, तन्न,
८५ वाय्वादिनोदनाधीनक्रियायाः कृतिव्यभिचारेण यागादेरपि कृत्यसाध्यत्वप्रसङ्गात्. किञ्च प्रत्यक्षादिमनोवृत्तौ कृतिसाध्यत्वादर्शनाच्छ्रवणाद्यात्मकमनोवृत्तेरपि कृतिसाध्यत्वाभावप्रसङ्गः. यदुक्तञ्जीवकर्तृकक्रियायाः कृत्यव्यभिचार इति, तन्न. न तावज्जीवकृतिसाध्यत्वङ्कृतिमात्रसाध्यतावच्छेदकम्,
९० ईश्वरकृतिसाध्ये अव्याप्तेः, नापि जीवकृतिसाध्यतावच्छेदकम् आत्माश्रयात्. न च जीवकर्तृकक्रियात्वमात्रावच्छेदकतयाभिमतम्, किन्तु यागादिक्रियाविशेष उपलक्ष्यते, तत्र चास्त्येवाव्यभिचारः, ज्ञानन्तु जीवकर्तृकञ्चाप्यप्रसिद्धमेवेति वाच्यम्, तव मते अवधारणात्मक ब्रह्मसाक्षात्कार-
९५ स्यापि निदिध्यासनादिद्वारककृतिमन्तरेणासिद्धेः, न च कृत्यव्यवधानाभावान्न कृतिसाध्यत्वमिति वाच्यम्, घटादेः कृतिसाध्यत्वाभावप्रसङ्गात्. न च निदिध्यासितव्य इति निदिध्यासनस्य विहितत्वात् तत्कृत्यतिरिक्तदर्शनहेतुकृत्यभावाच्च दर्शनविधिर्व्यर्थ इति वाच्यम्, तर्हि तत एवावि-
१०० धानमिति स्यात्, न तु कृत्यसाध्यत्वात्. वस्तुतस्तु दर्शनसमानाकारध्यानस्य विधेयत्वात्तस्य च कृत्यव्यभिचाराज्ज्ञानन्न विधेयमित्यनुपपन्नम्, ज्ञानार्थस्य ज्ञानत्वमविरुद्धम्, पटज्ञानादिवदिति. दर्शनान्तरस्य विध्यदर्शनाच्च ब्रह्मदर्शनस्य

विधेयतेत्यत्राह **तथाचेति;** यदि कश्चिद्दर्शने विध्य-
१०५ भावाद्दर्शनान्तरेऽपि न विधिः, तर्हि "विष्णुरुपांशुयष्टव्यः,
प्रजापतिरुपांशुयष्टव्यः, अग्नीषोमावुपांशुयष्टव्यौ," इत्या-
दावनुवादरूपत्वस्य स्थापनाज्ज्योतिष्टोमादावपि विधिर्न
स्यात्, यदि तत्र प्राप्ति तदभावाभ्यां विशेषस्तदा प्रकृतेऽपि
स एव विशेषोऽङ्गीकार्य इत्यर्थः. **दर्शन इति,** अत्मदर्शने
११० विधिबाधनं स्यादित्यर्थः. **तदेति,** श्रवणमात्राद्यत्नान्तर-
व्यतिरेकेण मननाद्यसिद्धेर्यदि विधेयता तदा दर्शनेऽपि
तुल्यमिति भावः. **फलेति,** फलोपकारितया अङ्गतया
चेत्यर्थः, फलोपकारित्वञ्च फलकरणत्वं, करणत्वं श्रवणस्य,
अङ्गत्वमितरयोः. **विरोध** इति, अयञ्च मननिदिध्या-
११५ सनयोरनुसन्धेयः. एवं सम्प्रतिपन्नपापध्वंसदृष्टान्तेन
दुःखध्वंसस्य साध्यत्वेऽपि नित्यत्वमुपपादितम्, वस्तुतस्तु
पापध्वंस एव मोक्षः, तत्र च साध्यत्वेऽपि नित्यत्वं सम्प्रति-
पन्नमेवेत्याह **न चेति. पुनः प्रतिबन्धेति,** यद्यपि प्रति-
बन्धकत्वं कार्यविनाशकम्, किन्तु तदुत्पत्तिविरोधि,
१२० तथाप्यत्र चक्षुरादिजनितज्ञानावस्थायाः प्रतिबन्धकीभूत-
कर्मणानिवृत्तिदर्शनादिहापि पुनः प्रतिबन्धसत्त्वे तच्छङ्का
स्यात्, तन्निराकरणार्थमिदमुक्तम्, न चैवं चक्षुरादिजन्य-
ज्ञानस्य द्वितीयक्षण एव निवृत्तिस्स्यादिति वाच्यम्,
यादृशप्रतिबन्धकत्वादृशस्यैव निवर्तकत्वात् चक्षुरादिसम्प्र-
१२५ योगाद्यभावविशिष्टञ्च कर्म प्रतिबन्धकम्, चक्षुस्सम्प्रयोगादि

च तचोत्तेजकम्, न चैतद्द्वितीयचरणेऽस्ति, न च चक्षुरादे-
रुत्तेजकत्वे ज्ञानकरणत्वानुपपत्तिः, साक्षात्कारत्वानुमिति-
त्वादिवैजात्यप्रयोजकतया करणत्वस्याप्यावश्यिकत्वादिति
भावः. न तत्रापीति, विध्यपेक्षेति शेषः. ननु ध्यातव्य-
१३० गोचरश्रवणमननयोर्मोक्षार्थतया विधानं स्यात्, राग-
प्राप्तस्यापि राजसूयाङ्गतया विदेवनादेर्विधानवदिति
शङ्कापरिहारमुपसंहरति अत इति, मोक्षसाधनत्वेन
ध्याने विहिते लोकत एव ध्यानोपकारकत्वेन सिद्धयो-
श्श्रवणमननयोर्ध्यानार्थतयैव प्रवृत्तेस्तत एव ध्यानसिद्धा
१३५ मोक्षसिद्धेर्न तत्र मोक्षार्थमपि विध्यपेक्षा, राजसूयम्प्रति
तु विदेवनादीनां लोकतोऽङ्गत्वेनाप्राप्तेर्नियतानुष्ठानसिद्धये
तदङ्गतया विधानं युक्तमेव, अतः श्रोतव्यो मन्तव्य इत्यनु-
वाद एवेति. तत्तदिति, अविच्छिन्नत्वदर्शनरूपत्वप्रीति-
रूपत्वादयो गुणाः. नन्वेवङ्गुणानामप्राप्ततया विधानेऽपि
१४० स्वरूपस्य विधानञ्च स्यादित्यत्राह फलेति, फलसाधन-
तया प्राप्त्यभावात् स्वरूपस्यैव विदेवनवद्विधेयतेत्यर्थः.
एतेन यदुक्तङ्कैश्चित्, उपायत्वदशाप्रभृतिभगवज्ज्ञानप्रीति-
रूपमिति वदताम्भवतामते हृतश्रवणमननप्रतिभगवतो-
ऽत्यन्तानुकूलत्वादनुकूलविषयचिन्तने च रागत एव प्रवृत्तेः
१४५ तच्चिन्तनरूपनिदिध्यासनस्यैव विधिर्न स्यात्, तत्र रागप्राप्ते
चिन्तने अविच्छिन्नत्वादिगुणविधानवद्रागप्राप्ते श्रवणे गुरु-
मुखपूर्वकत्वादिविधानं श्रवणादिवाक्येष्वस्त्विति. तन्निर-

स्तम्. तथा हि, किमयाज्ञातज्ञापकत्वमसम्भवति, उता-
प्रवृत्तप्रवर्तकत्वम्, नाद्यः, निदिध्यासनस्य मानान्तरेण
१५० मोक्षसाधनत्वेनाप्राप्तेः तदुद्देशेन विधानसम्भवात्. न
द्वितीयः, मोक्षार्थिनो विधिं विना तत्र प्रवृत्त्यसम्भवात्.
ननु मोक्षार्थिनस्तत्र प्रवृत्त्यभावेऽपि सुखरूपे तस्मिन्
भगवद्ध्याने तदुद्देशेन प्रवृत्तौ तत्स्वाभाव्यात् मोक्षोऽपि
सेत्स्यतीति चेन्न, न हि भगवद्ध्यानमात्रम्प्रीतिरूपमिदा-
१५५ नीन्तदर्शनात्, किन्तु अहरहरनुष्ठीयमानानभिसंहित-
फलभगवत्समाराधनात्मकनित्यनैमित्तिकादिभिः परिशुद्धे
मनसि शान्त्यादिपरिष्कृते अहरहरभ्यासाधेयातिशयस्य
ध्यानस्य बहुकालसाध्यस्य प्रीतिरूपत्वमिष्यते. न च
निरतिशयनित्यपुरुषार्थेच्छां विना शमदमादि संभवति,
१६० नापि ध्यानरूपसुखस्यावगमेऽपि तस्य वैषयिकसुखवदेवा-
न्यास्थिरतया त्रिवर्गप्रावण्येन प्रतिबन्धाच्च बह्वायाससाध्या
द्योगकर्मादिप्रवृत्तिर्विषयनिवृत्तिश्च सम्भवति. यच्चोक्तन्त-
रेव, भवद्भिरपि "सहकार्यन्तरविधिः" इति सूत्र
"तस्माद्ब्राह्मणः पाण्डित्यन्निर्विद्य" इत्यादिवाक्यैरौपदेशि-
१६५ कार्थाधिगमस्य पुनःपुनः ब्रह्मसंशीलनस्य च विधेरङ्गी-
कृतत्वेन तयोरेव श्रोतव्यो मन्तव्य इत्याभ्यां विधिरस्तु,
औपदेशिकार्थाधिगमादौ श्रवणादिपदप्रयोगादिति.

तदिदमाचार्यैरेवाशङ्क्य निरस्तम्. ननु न्यायोपेत-
वाक्यमीमांसानवगम्यकेवलोपदेशगम्यार्थविशेषश्रवणं श्रोतव्य

१७० इत्यत्र विधेयमिति चेन्न, मननपूर्वभावितया श्रवणस्य
न्यायानुगृहीतवाक्यजन्यज्ञानरूपतावगमाच्छब्दस्वारस्याच्च.
न च मन्तव्य इत्यादावननसंशीलनरूपमननविधिरिति
वाच्यम्, श्रवणशब्दस्य न्यायोपेतवाक्यजन्यज्ञान इव मन्तव्य-
शब्दस्य तत्प्रतिष्ठापने प्रसिद्धिप्राचुर्यात्, तस्य चापवादा-
१७५ भावात्, उभयोरप्राप्तार्थविधायित्वे वाक्यभेदप्रसङ्गात्. ननु
दर्शनरूपताविशिष्टध्यानविधिवदुपदेशगम्यार्थश्रवणशुभाश्रय-
मननविशिष्टनिदिध्यासनविधिः किन्न स्यात्, नैवम्,
चतुर्ष्वंशेषु विधेस्तात्पर्यकल्पनादपि द्वयोस्तत्कल्पनस्य लघु-
त्वात्. न चास्मिन्वाक्ये विधानाभावादौपदेशिकार्थाधि-
१८० गमावननसंशीलनयोरसिद्धिश्शङ्कनीया, "तस्माद्ब्राह्मणः
पाण्डित्यन्निर्विद्यबाल्येन तिष्ठासेत्, बाल्यञ्च पाण्डित्यञ्च
निर्विद्याथ मुनिः" इत्यनन्यथासिद्धवाक्यान्तरसिद्धत्वात्.
किञ्च सर्वत्र निगमाधीनार्थावधारणस्य न्यायानुसन्धाना-
त्मकमननस्य च निदिध्यासनसहपाठादिहापि तत्सह-
१८५ चरितयोस्तथात्वमेव युक्तम्, "आगमेनानुमानेन ध्याना-
भ्यासवशेन च। त्रिधाप्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्॥"
इति स्मृतौ "श्रुत्वामत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ।
संशयञ्च पराणुद्यलभते ब्रह्मदर्शनम्॥" इति त्वदुदाहृत-
श्रुतावन्यत्रापि तथा दर्शनात्. साध्यसाधनभावाभावा-
१९० दिति, निदिध्यासितव्यो द्रष्टव्य इति पदयोरेकविषयत्वेन
तदर्थयोस्साध्यसाधनभावाभावादित्यर्थः. निदिध्यासितव्यो

द्रष्टव्य इत्यनयोरैकार्थ्याभावे द्रष्टव्य इत्यस्य दर्शनसमानाकारत्वोपचारस्थलभावेन न तादर्थ्येन लोकसिद्धसाधने ध्याने प्रवृत्तिसम्भव इति भावः. किं युगपदनुष्ठितयो-
१९५ स्समुच्चयः, उत क्रमेणेत्यभिप्रेत्याद्यन्दूषयति **यौगपद्यस्येति.** क्रमेऽपि किमङ्गाङ्गिनोस्समुच्चयः उत प्रधानयोः, आद्य आह **क्रमेऽपीति. उपकार्योप**कारकयोरिति, सतोरिति शेषः. द्वितीय आह **न च क्रमि**कयोरिति, यथादर्शपूर्णमासाभ्यामिति द्विवचनात्समुच्चयः, तथेह नास्ती-
२०० त्यर्थः. नन्वेकफलोद्देशेन मास्तूभयोस्समुच्चयेन विधिः, किन्तु दर्शनमेव फलार्थं विधीयते, तदङ्गभूतस्मृतौ तु तत्फलस्यानुवादमात्रमित्याशङ्क्याह **न चाङ्गेति,** स्वतः—स्वरसतः, स चार्थः साक्षात्साधनत्वम्. **न चात्रेति,** तत्र हि जीवोपासनस्य मोक्षसाधनताप्रतीतावपि तस्य यथा-
२०५ फलमेव, एवम्ब्रह्मोपासनस्यापीत्यर्थः. **न तथेति,** न भूयश्श्रवणाभावो नापि निषेध इत्यर्थः. **एवं स्थित इति,** ननु दर्शनशब्दलक्षणाभयात् भिन्नार्थत्वमेव वाच्यमिति चेन्न, वाक्यस्वारस्यानुसारेण पदलक्षणायान्याय्यत्वात्, अत एव गङ्गायाङ्घोष इत्यत्र लक्षणा. **स्मृतिशब्देनेति,** स्मृति-
२१० समानाकारत्वं हि ज्ञानत्वादि, तच्च दर्शनविधानादेव सिद्धम्, तथा च दर्शनविध्यसिद्धस्य विधेयस्यासिद्धेर्ध्यानविध्यानर्थक्यम्. दर्शनसमानाकारोपचारे तु वैशद्यस्य ध्यानविधिमात्रेणालाभात् द्रष्टव्य इत्यस्यापि सार्थ-

कत्वमित्यर्थः. दर्शनशब्दस्य चाक्षुषज्ञाने मुख्यस्य प्रत्यक्ष-
२१५ परत्वेऽपि लक्षणैव, अत उभयोर्लक्षणापेक्षया एकस्यापि
मुख्यार्थापरित्यागो न्याय्य इत्यपि द्रष्टव्यम्. एवम्
"स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः," "तस्मिन् दृष्टेपरा-
वरे," इत्यत्र निर्णीतमर्थन्निदिध्यासितव्यो द्रष्टव्य इत्य-
त्रातिदिशति अत इति. भिन्नवाक्य एवैतन्न्यायदर्श-
२२० नात्कथमेकवाक्ये प्रवृत्तिरित्यत्राह तेनेति, विशेषसम-
र्पकत्वेनेत्यर्थः, न हि न्यायप्रवृत्तौ भिन्नवाक्यत्वमेकवाक्यत्वं
वा प्रयोजकम्, किन्तु सामान्यविशेषभावः, स चेहाप्य-
स्तीति भावः. न चेति, विशिष्टविधेरेकेन लाभादिति
भावः. अग्नय इति, तत्रापि विशिष्टस्य देवतात्वमेकेनैव
२२५ प्रत्ययेन लभ्यते, अत उभयत्रापि प्रत्ययान्तरमनुवाद-
स्साधुत्वार्थं वेति भावः. एवमिति, एवं स्वपक्षे स्थिते
परपक्षे दोष उच्यत इत्यर्थः. नैरर्थक्यमिति, वाक्य-
श्रवणादेव वाक्यार्थज्ञानसिद्धेरिति भावः. प्रत्यक्षार्थतया
सार्थक(त्व)मित्याशङ्क्याह शब्देति. न चेति, प्रतिबन्धक
२३० इतीत्यनन्तरमितीति शेषः, न चेत्येतदनेन सम्बध्यते.
विपरीतवासना-भेदभ्रमजन्यसंस्कारः. असम्भावना-अद्वैत-
मोपपद्यत इति बुद्धिः. विपरीतसम्भावना-भेद उपपन्न
इति बुद्धिः. कथमिति, उक्तोक्तमादीनामप्यभ्यस्तत्वेन
संस्कारजन्यत्वादित्यर्थः. अनादीति, यदि विरोधि-
२३५ गोचरत्वादद्वैतज्ञानस्य भेदवासनानिवर्तकत्वमतः एकेनापि

निवृत्तिस्स्यात्, यदि तावतामेकेन निवृत्तिर्न सम्भवति, तदा तावत्कालध्यानेनैव तन्निवृत्तिस्स्यादिति भावः. **अनुत्पन्न** इति, ध्यातव्यादिज्ञानन्ध्यानाद्यहेतुरिति भावः. **कथमिति**, प्रत्युतविपरीतवासनावर्धकत्वमिति भावः.
२४० **तदसिद्धा**विति, अभेद एव तात्त्विक इति ज्ञाने सत्येव तद्विपरीतभेदभ्रमनिरासाभिलाषो भवेत् नान्यथेति भावः. **अभेदस्ये**ति, अभेदस्य ब्रह्मस्वरूपतया तस्य च निर्विशेषत्वात् स्वरूपेणैव तत्सदा विषयीक्रियते, न तु कदाचित्किञ्चिद्धर्मविशिष्टतया, अतोऽतिरिक्ताकारप्रकाश-
२४५ रूपवैशद्यन्न सम्भवतीत्यर्थः. **विशेषे**ति, तथा च ब्रह्मण-स्सविशेषत्वं स्यादित्यर्थः. **भेदे**ति, भेदवासनानिरास-साध्यस्येत्यर्थः. **ज्ञानमात्र**स्येति, मात्रशब्देन अज्ञानस्य ज्ञानविशेषस्य च निरासात् क्वचिन्मतेऽज्ञानत्वात् क्वचित् ज्ञानविशेषत्वात् न निदिध्यासनसाध्यतेत्यर्थः. **एवमाचार्य**-
२५० **स्ये**ति, श्रावणासिद्धिप्रसङ्ग इत्यर्थः. **भवत्पक्ष** इति, दोष-स्यापि त्वयाबाध्यतुल्यमिथ्यात्वाङ्गीकारादित्यर्थः. **अवि-द्याविशे**षेति, विशदज्ञानात्काचिदविद्यानिवृत्ताकाचिन्नेति भावः. **विशदे**ति, गुरुमुखश्रवणेनार्थो मे विशद इति प्रत्यक्षविरोध इत्यर्थः. सिद्धान्तविरोधं विवृणोति,
२५५ **विशदाध्य**क्षितेति. अविद्याविशेषात्मवचनादिपक्षे दूषण-माह **न चेति**, त्वमेवाज्ञानापादनेन गुरुभ्योद्रुह्यसि, ते तु स्वाज्ञानमज्ञानुमन्यन्त इत्युपालम्भः. अज्ञानानुमतौ

दोषमाह **तथा सतीति**, अद्वैतस्याज्ञाने त्वया तद्-
साधनाज्ञावयोर्विवादस्स्यात्, न हि किञ्चिदज्ञानेऽपि
२६० कस्यचिदज्ञानस्य निवृत्त्याव्यवहारसम्भवः, पूर्वदिनेऽज्ञान-
निवृत्तौ उत्तरदिनेऽज्ञानान्तरसत्त्वेऽपि व्यवहारप्रसङ्गात्,
एकतमो निवृत्तौ तमोऽन्तरसत्त्वेऽपि व्यवहारप्रसङ्गाच्चेति
भावः. येषामविद्यानिवृत्तिर्नास्ति तेषां ज्ञानमपि न
जातमित्यत्र परेषाम्श्रवणनाद्यसम्भव उक्तः, इदानीन्दोषा-
२६५ न्तरमाह **किञ्चेति**. **निराश्रयेति**, निर्विषयविवादा-
योगादित्यर्थः. **तस्येति**, ध्यानादिद्वाराभाविविशदज्ञा-
नानुपकारकत्वमित्यर्थः. **इदानीन्तनस्येति**, निवृत्तस्य
पुनर्निवृत्त्ययोगादित्येवकाराभिप्रायः. **अविशेषात्**—स्वरूप-
विषयत्वाविशेषादित्यर्थः, अविशदमपि स्वरूपाज्ञाननिवर्त-
२७० कन्दृष्टमिति भावः. **सविशेषत्वमिति**, विशदज्ञानस्य
तत्त्वज्ञानत्वादिति भावः. **कथमिति**, निर्विशेषज्ञान-
म्भविष्यतीति कथमवगतमित्यर्थः. **श्रुतेरिति**, अद्वैत-
श्रुतेर्निर्विशेषबोधनसामर्थ्यपर्यालोचनेनेत्यर्थः, इदानीन्तन-
स्यापि तादृशश्रुतिजन्यज्ञानत्वादिति भावः. व्यवसायः—
२७५ अप्रामाण्यशङ्काशून्यं ज्ञानम्. वेदप्रामाण्यनिश्चयेऽपि तत्ता-
त्पर्यसन्देहात् व्यवसायाभाव इत्याशङ्क्य तथापि श्रवण-
वेलायामेव शङ्कितात्पर्यावधारणेन मननादिवैयर्थ्यमित्याह
**प्रमाणत्वेति**, न्यायतस्तात्पर्यनिर्णयेऽपि बाधकतर्का-
भावोत्थापितसन्देहनिराकरणाय ज्ञानान्तरं मननवदिति

२८० प्रकृते, **मननवदिति.** **विषयेति,** प्रमाणैक्येन चेति शेषः, एकस्यापि प्रमाणस्य विषयभेदे परोक्षापरोक्षजनकत्वं दृष्टम्, मनस आत्मप्रत्यक्षवज्ज्ञादिस्मृतिजनकत्वदर्शनात्, विषयैक्येऽपि प्रमाणभेदाद्दृष्टं यथैकस्यैव वह्नौ प्रत्यक्षानुमानाभ्याम्, विषयप्रमाणैक्ये तु न दृष्टमित्यर्थः. ननु
२८५ सहकारिवैचित्र्यादात्मस्मृतिजनकत्वं दृष्टम्, अत इहापि मननादिसहकारिवैचित्र्यादपरोक्षं सम्भवतीत्यत आह **सिद्धावपीति.** किञ्च किम्भ्रान्तिनिवृत्त्यर्थमपरोक्षज्ञानमुत तदनुवृत्तिनिवृत्त्यर्थम्, आद्य आह **उत्पन्नेति.** द्वितीय आह **भ्रान्तीति,** ननु भ्रान्तिकारणभूताज्ञाननिवृत्त्यर्थमिति
२९० चेन्न, परोक्षज्ञानादपि तत्सम्भवस्योपपादयिष्यमाणत्वात्.

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायाम् अविधेयज्ञानवादभङ्गश्चतुर्थस्कन्धः.

श्रीमते महाचार्याय नमः।

---

श्रीमते महाचार्याय नमः।

शतदूषणीव्याख्याने चण्डमारुते

## बाधितानुवृत्तिभङ्गः पञ्चमस्कन्धः।



हृदि विनिहिते दैवाद्यत्पादपङ्कजगोयुगे
भवति विविधश्रेयःपारम्परी निरवग्रहा।
दुरितनिवहैर्दुर्नैदिष्ठम्भवन्नु समाध्वसै-
र्मनसिकरवै वेदान्तार्यं तमनन्यकथोज्झितः॥

५ नैव क्षमाणि दुरितानि महत्तदीक्षा-
क्रोडीकृतं क्षमपि तत्क्षणविद्रुतानि।
भूयस्तमौचितुमशेषविधः पुमर्थ-
स्तं श्रीनिवासगुरुरस्ति कृतं परैर्नः॥

**बाधितानुवृत्त्येति**, वृत्त्यभावे तृतीया, तत्त्वज्ञानेन
१० बाधितस्यापि भेदप्रतिभासस्य बाधितानुवृत्तिरूपैवानुवृत्तिः,
न तु प्राग्वदनुवृत्तिरित्यर्थः. भेदप्रतिभासानुवृत्तौ तत्कार्य-
बन्धोऽपि स्यादित्यत्राह **तदनुवृत्तावपीति**, भेदप्रति-
भासानुवृत्तावपि अविद्याया निवृत्तत्वात्तस्या दग्धपटवन्नकार्य-
कारत्वमित्यर्थः. ननु कथम्बाधानुवृत्त्योर्विरोधः भेदमिथ्यात्व-
१५ बुद्धिरूपबाधस्य भेदप्रतिभासानुवृत्तेश्चाविरोधात्, दृश्यते
हि एक एव चन्द्रः न द्वाविति चन्द्रभेदमिथ्यात्वज्ञाने

सत्यपि तिमिरादिवशात्तत्प्रतिभासानुवृत्तिरिति छिन्नमूल-
लौकिकविरोधमप्यजानानस्य शङ्कामनुवदति **प्रमाणबला-
दिति**. अबाधितः—अनिवृत्तः. माभूदविद्यानिवृत्तिः, न
२० च तथा सति बाधितानुवृत्त्यसिद्धिः, मिथ्यात्वबुद्धिरेवं
बाध इत्यभिधानादित्यचाह **न हीति**. मिथ्यात्वबुद्धेर्बाध-
रूपता ह्यविद्यानिवर्तकत्वादेवेति वाच्यम्, अन्यथा छिन्न-
मूललौकिकविरोधात्, त्वत्प्रकरणपाठकानां छिन्नानामपि
बाधितानुवृत्तिप्रसङ्गात्, जीवन्मुक्तानामेव हि सेष्यते, अतो-
२५ ऽविद्यानिवृत्तिपर्यवसित एव बाध इत्यर्थः. **सेति**, तत्त्व-
ज्ञानम्ब्रह्मव्यतिरिक्तस्य तत्त्वमिथ्यात्वज्ञानम्. **द्वैतेति**, आदि-
पदेन तन्मूलभेदप्रतिभासस्य सत्यत्वङ्गृह्यते. ब्रह्मस्वरूपानु-
प्रवेशान्मोक्षदोष इत्यचाह **न चेति**. **ब्रह्मण इति**,
आदिपदेन विनाशित्वङ्गृह्यते. **न चोपादानेति**, वास-
३० नापि भावकार्यतया अविद्योपादानेति भावः. एतेन
संस्कारः कार्योऽपि ध्वंस इव निरुपादान इति निरस्तम्,
किञ्च परमते ध्वंसोऽपि भावरूपाज्ञानोपादानक एव, यद्वा
अत्र कार्यपदेनानुवर्तमानशरीरादिकं विवक्षितम्. ननु
ध्वंसमात्रस्य प्रतियोगिजन्यत्वान्न व्याघात इत्यचाह **न च**
३५ **सहकार्यन्तरमिति**, आगन्तुकहेत्वन्तरमनपेक्ष्य स्वप्रध्वंस-
हेतुत्वस्य एकक्षणाधिककालवृत्तित्वस्य च व्याघातः. **अहेतु-
केति**, कार्यस्याहेतुकत्वाङ्गीकारे चार्वाकमतप्रवेशः, विना-
शस्याहेतुकत्वाङ्गीकारे क्षणिकत्वप्रसङ्गेन सौगतमतप्रवेश

इत्यर्थः. अविद्यायाश्चेति, ततश्च श्रवणाद्यायास वैयर्थ्य-
४० मिति भावः. ननु क्वचिदहेतुकनिवृत्तिमाचाय सर्वच तथा
प्रसङ्गः, त्वयापि क्वचिदहेतुकनिवृत्तेरङ्गीकार्यत्वात्, यथा
दहनेन दाह्यनाशे सति दहननाशः स्वत एव दृश्यते,
तथैव अन्यशब्दस्य मरणसमयानुभवजन्यसंस्कारस्य च स्वत
एव नाश इत्यचाह न चेति, संस्कारादिवदित्यनन्तरम-
४५ हेतुकनिवृत्तिरिति शेषः. तचापीति, दहननाशो दहनस्य
सूक्ष्मावस्थान्तरापत्तिः, तद्धेतुस्त दाह्यभस्मीभावावस्था, अन्य-
शब्दनाशस्य तदातनो गगने यत्किञ्चिद्द्रव्यसंयोगादिः,
तद्धेतुस्तु प्रसिद्ध एव, संस्कारनाशावस्थानरकानुभवादिः.
अतिरिक्ताभावपक्षेऽप्येत एव आगन्तुकहेतवः, उपान्त्यशब्द-
५० स्तन्नाशो वाऽन्त्यशब्दनाशकः. ईश्वरसङ्कल्पोऽप्यागन्तुककारण-
मित्याह ईश्वरेति, अतस्ततो निवृत्तेरसम्भवाद्वाक्यजन्य-
मिथ्यात्वज्ञानादेवाक्रियावासनानिवृत्तिः, ततश्च न भेद-
प्रतिभासानुवृत्तिसम्भव इति स्थितम्. यद्येवम्मिथ्यात्वज्ञाने
सति भेदप्रतिभासासम्भवः कथन्तर्हि तस्मिन् सत्यपि चन्द्र-
५५ भेदप्रतिभास इत्याशङ्क्य वैषम्यमाह द्विचन्द्रादाविति,
द्विचन्द्रादौ तु दोषस्याबाध इति तन्मूलभ्रमपरम्परानुवृत्ति-
र्घटत इत्यन्वयः. चन्द्रैकत्वस्चन्द्राभेदः. तदुभयेति, यथा
ताराप्रकाशांशस्य चन्द्रैकत्वप्रकाशविरोधिविषयत्वाभावः तथा
दोषप्रकाशांशस्यापि चन्द्रैकत्वप्रकाशविरोधिविषयत्वाभावादि-
६० त्यर्थः. बाधकज्ञाने निषेध्यत्वेन विषयस्यैव बाध्यत्वादिति

भावः. कस्यचिद्दोषमिथ्यात्वज्ञानेऽपि चन्द्रभेदप्रतिभासो दृश्यत इत्यचाह दोषो मिथ्येति. यौक्तिकेति, त्वदुमति कल्पितदुर्न्यायमूलदोषमिथ्यात्वज्ञानस्य मिथ्यात्वसाधकनिरासादेव भ्रान्तितया दोषाणां सत्यतया न बाध इत्यर्थः.

६५ वस्तुतस्तत्पचेऽपि दोषस्य यौक्तिकज्ञानादनपाय एवेति तन्मूलभ्रमो घटत एव. विरोधितत्त्वविषयत्वेन निवर्तकत्वे अविद्यावदिदानीमेव वासनाया अपि निवृत्तिप्रसङ्गात्, बाध्यबाधकज्ञानयोर्मिथ्यात्वाविशेषेण वास्तवप्रामाण्य तदभावाभ्यामपि विशेषाभावात्, बाधकज्ञानस्य बाध्यप्रति-

७० भासापेचया विशेषेण बलाभावाच्च पश्चादप्यनिवृत्तिप्रसङ्गादेकहेलयैव निवार्यत्वं वाच्यमित्याह कारणभूतेति.

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरण परायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां बाधितानुवृत्तिभङ्गः पञ्चमस्कन्धः ॥

श्रीमते महाचार्याय नमः ।

---

श्रीमते मध्वाचार्याय नमः ।

शतदूषणीव्याख्याने चण्डमारुते

# विविदिषासाधनत्वभङ्गः षष्ठस्स्कन्धः ।

---

अद्वैतिजालकलिसेनमुदीर्णदर्प-

मौषज्ज(ऊ)लङ्करमनाहतमर्मणा यैः ।

संवर्मितेन निगमान्तगुरोः प्रबन्धै-

स्ते ब्रह्मतत्त्वमिह नः प्रतिबोधयन्तु ॥

५ सकलजनहिते च्छुश्रीनिवासार्यवर्यो-

हृदि निहितहितार्थस्वेत्तयोमातुरेषः ।

कुमति(पिहि)विहतवाचो न ह्युपादेच्यदस्या

स्थिरतरमतिकष्टातस्ववस्थाऽन्ववत्स्यत् ॥

**इष्टेति,** इहामुत्रार्थफलभोगविरक्तान्. साचाद्यदुपासि-

१० साधनतयेत्यन्वयः. **विविदिषन्तीति** हीति, सन्नन्तप्रकृति-

धात्वर्थेन नान्वयः, उपसर्जनत्वात्. **आश्रमाङ्गतयेति,**

आश्रमप्रयोज्यतयेत्यर्थः, अनेन नित्यत्वं विवक्षितम्. गु(द्रु)क्त-

धर्मकारणान्तराभावादिवत् क्वचित्त्वस्यैवानिवृत्तेः कार्याभाव

इत्याह **सम्भवतीति.** **चित्तापशुफलत्वादाविति,** चित्रायाः

१५ पशुफलत्वादौ. **तस्या इति,** तथा च श्रुतिबलात्साधनत्वे सिद्धे

कारणान्तराभावात्कर्मादिवैगुण्याद्वा कार्याभावं . इत्युक्तोयत

इति भावः. अ...ति, तथा च श्रुत्यक्षरपर्यालोचनैव कार्या, नोक्तार्थविरोध इत्यर्थः. अन्यथा—श्रुत्याक्षमाश्वासाभावे. चार्वाकमताप्रवेशेन यत्र कुत्र चिद्यस्य कस्यापि कारणत्व-
२० मङ्गीकुर्वता कर्मणां वेदन साधनत्वम् निराकर्तुं शक्यमित्यभिप्रायेणाह **कुर्वन्निति**. विस्मरणशीलस्य व्यभिचारनिमित्ताशङ्कामुक्तार्थस्मारणेन परिहरति **व्यभिचारस्ये**ति. एतेन—वक्ष्यमाणेन. **किङ्कर्मापेक्ष्ये**ति, अन्यथा घटमानयेति वाक्यार्थज्ञानाय घटादिस्मरणाय च यागाद्यनुष्ठानप्रसङ्गादिति
२५ भावः. **इच्छाया** इति, यदीच्छामात्रे तदपेक्षाभावेपि प्रमाणबलादिह तदपेक्षा तदा प्रकृतेऽपि तुल्यमिति भावः. अविशेषे कथं विविदिषासाधनत्वप्रतिक्षेप इत्यत्राह **कषाय** इति. **अविहिते**ति, अविहितस्य तदप्रतिषिद्धस्येत्यर्थः. शमादेस्तावन्मात्रविषयत्वे नियामकमाह **विहितस्य** चेति.
३० ननु फलाभिसन्धिविरहेऽपि तद्योग्यस्य कथन्तदनारम्भकत्वम्, न हि दाहार्थं स्पृष्टएव वह्निर्दहतीति नियमोऽस्तीत्यत्राह **अनेके**ति, श्रुत्येकसमधिगम्येऽर्थे तत्तत्कामाधिकारबलाद्यथा श्रुतिः तथाङ्गीकार इति भावः. **अतएवे**ति, फलाभिसन्धितदभावाभ्यामेवेत्यर्थः. तदेव विवृणोति **तत्रापी**ति. **हस्त-**
३५ **समालोच** इति, हस्तस्येव समालोचनमित्यर्थः, एकहस्तवदेव होतरहस्तोऽपि. अयञ्चघञन्तत्वान्नियत पुल्लिङ्गः. **सोऽन्वेष्टव्य** इति, आदिशब्देन "तद्विजिज्ञासस्व" इत्यादेस्सङ्ग्रहः, प्रकृत्यर्थस्यैव वाक्यार्थान्वयेऽपीच्छानुवादश्रुतेश्शीलम्, तथाचोपसर्जने-

नापि प्रकृत्यर्थेन विध्यन्वयवत्करणान्वयो युज्यते चेति भावः.

४० **तेष्विति**, "विजिज्ञासितव्यः, विजिज्ञासितव्यम्, निदिध्यासितव्यः", इत्यादिष्वित्यर्थः, अत्र वाक्येष्विति विशेष्यमध्याहार्यम्. शङ्कते **विधिवलेति**. अनुवादरूपत्वे हेतुः **ध्यायीते**त्यादीति. **शाब्दमप्र**त्ययार्थप्राधान्यमनादृत्येति, अत्र हेतुरनुवादरूपत्वम्. **स्वीक्रियत** इति, प्रकृत्यर्थेनैव विध्यन्वय-

४५ हेतुतयाद्रियत इत्यर्थः. उपसर्जनेन प्रकृत्यर्थेन करणान्वयोपि लोके दृष्ट इत्याह **लोकेचे**ति. शङ्कते **अचासे**रिति. **अनन्यपर**त्वस्येति, "क्रियावानेष ब्रह्मविदांवरिष्ठः", इत्यादि वेदनसाधनत्वप्रतिपादकश्रुतिबलादिति भावः. **अयोग**स्येति, इच्छान्वयायोगस्येत्यर्थः. **तथेति**, तथात्वे-यज्ञादिसाध्यत्व

५० इत्यर्थः. **वेदने**च्छायामिति, विविदिषायास्स्वतः प्रयोजनत्वाभावेन वेदनार्थमेवोद्देश्यत्वादिति भावः. **तद्विषयत्वा**दिति, तस्याः—विविदिषायाः. ननु वेदनेच्छाभावे कथं विविदिषेच्छाया असम्भव इत्याकाङ्क्षायाम् तद्विषयेच्छायास्स्वयमप्रयोजनत्वाभावेन तत्साधनत्वेनैवोद्देश्यत्वादित्याह **विविदिषा**दीति.

५५ अपवर्गः—अविद्यानिवृत्तिः, आदिशब्देनानवच्छिन्नब्रह्मानन्दानुभव उच्यते. **तदर्थे**ति, वेदनार्थश्रवणाद्यनुष्ठानपर्यन्तेत्यर्थः. **प्रागुक्तेति**, तीव्रविविदिषाहेतुभूतयज्ञाद्यधिकारिणः तीव्रवेदनेच्छाभावे वेदनौन्मुख्यमात्राद्वेदनसाधनश्रवणादाविव ततोऽपि व्यवहितायां श्रवणादिहेतुतीव्रविविदिषाया-

६० मिच्छा न स्यात्, तीव्रविविदिषाङ्गीकारे तु यज्ञाद्यसाध्यत्व-

चक्रकयोः प्रसङ्ग इत्यर्थः. तथापीति, प्रातिकूल्यशब्दः प्रतिकूलपरः, भोजनप्रतिकूलमित्यर्थः, प्रातिकूल्यहेतुपरो वा, भोजनस्य प्रातिकूल्यहेतुरित्यर्थः. तत्प्रातिकूल्येति, वेदनेच्छायां सत्यामपि रजस्तमोऽभिभूतत्वात्तत्साधनश्रवणादौ

६५ दुःखसाध्यगुरुशुश्रूषादिसाध्ये प्रातिकूल्यबुद्धिर्भवतीति रजस्तमोनिबर्हणार्थङ्कर्मेत्यर्थः. तर्हीति, विविदिषायाः पूर्वं सिद्धत्वाद्रजस्तमोनिबर्हणार्थमेव कर्मानुष्ठानमिति विविदिषार्थतया यागादिकं श्रुतिप्रतिपाद्यन्न स्यादित्यर्थः. गुरुशुश्रूषादिदुःखसाध्येऽपि श्रवणादौ प्रातिकूल्यबुद्धिविरोधिनीच्छा रजस्तमो-

७० निबर्हणमन्तरेण न भवतीति यज्ञादिभिस्तादृशेच्छायाञ्जनीयायां रजस्तमोनिबर्हणस्यावान्तरव्यापारत्वात् यज्ञादेर्विविदिषार्थतया श्रुतिप्रतिपाद्यत्वमविरुद्धमिति शङ्कते अवान्तरेति. यद्यप्येवं सति पूर्वोक्तान्योन्याश्रयः स्थिरएव, तथापि दूषणान्तरमाह तर्हि वेदनेति. एवं व्यापारस्या-

७५ व्यवधायकत्वेन विविदिषाकारणत्वाङ्गीकारे रजस्तमोनिबर्हणप्रातिकूल्यनिवृत्तिं विविदिषां श्रवणादिकञ्च द्वारमङ्गीकृत्य वेदनसाधनत्वमङ्गीकर्तुं शक्यमेव, बाधकाभावात्, एवञ्च श्रुत्यन्तरानुसाराद्वेदनसाधनपरत्वमेवास्य. वाक्यस्याङ्गीक्रियतामिति भावः. तद्भक्तावपीति, तस्मिन्निवेति भावः. भक्ति-

८० विधुरस्यापि भक्तेर्मोक्षसाधनत्वं ज्ञातवतोभक्तीच्छा सम्भवत्येव, तथापि प्रथम कोटिमभ्युपेत्याह तन्न प्रीतिरूपेति. भेषजादिभिरिति, आदिशब्देन मणिमन्त्रादिग्रहः. काम-

शाखादिष्विति, आदिशब्देन "रोचनालक्ष्मणामूलकल्क-
लिप्ततनूर्वधूः। स्वतो प्राप्नोति सौभाग्यन्दयितप्रियतामपि॥"
८५ इत्याद्युक्तायुर्वेदसङ्ग्रहः. **सञ्ज्ञातमात्रा**दिति, प्रेम्ण इति
विशेषाध्याहारः. **ज्ञानवदिति,** विशेषतो ज्ञानेच्छायां
सत्यामपि विशेषतो ज्ञानाभावादित्यर्थः. व्याप्रियत इत्य-
नन्तरं न तु विशेषतो ज्ञात इत्यध्याहारः. **अन्यथेति,**
विशेषतो ज्ञातेचेदित्यर्थः, सिद्धइच्छाविरहादितिभावः.
९० **विविदिषायामप्येव**मिति, यथा जिज्ञासाकारणतया पूर्वं
ज्ञानसत्त्वेऽपि ज्ञानान्तरविषयिणी जिज्ञासा, तथा वेदने-
च्छाया विविदिषेच्छाकारणतया पूर्वं सत्त्वेऽपि विविदि-
षान्तरविषयिणीच्छास्त्वित्यर्थः. कारणीभूताया अपि वेदने-
च्छाया इष्यमाणतयाऽभिमतेच्छासजातीयत्वाद्विषमोदृष्टान्त
९५ इत्याह **न विशेषेच्छा**या इति, विशेषविषयाया इच्छाया
इत्यर्थः. ननु विशेषविषयेच्छासिद्धावपि स्वरूपतएव तद्वि-
जातीया तद्विषयेच्छैवेष्यतामित्यत्राह **न च विषयेति,**
यद्यप्येकस्मिन्नेव विषये इच्छायामुत्कटत्वानुत्कटत्वरूपजाति-
विशेषो लोकसिद्धः, तथापि पूर्वोक्तरीत्या उत्कटेच्छाप्यत्रा-
१०० स्तीति तात्पर्यम्. यद्वा जिज्ञासाविषयीभूत विशेष ज्ञानस्य
कारणीभूत सामान्यज्ञानादिवात्र इष्यमाण विविदिषाया
विद्यमानविविदिषापेक्षया विषयविशेषावच्छेदान्न वैलक्ष-
ण्यम्भूमः, किन्तु लोकसिद्धोत्कटत्वादिनैवेत्याशङ्क्यतदपि
प्रकृते न सम्भवतीत्याह **न च विषयेति,** विषयविशेषात्र-

१०५ च्छेदातिरिक्तो यो जातिविशेषः श्रौत्कण्ठ्यादिरूपस्स प्रकृते न सम्भवतीत्यर्थः. तादृशोत्कटवेदनेच्छाया असिद्धावुत्कट-विविदिषाविषयत्वेच्छाया असम्भवादित्यर्थः. ननु दृश्यमाण भक्तावपि कथम्प्रकृते 'जातिविशेषसम्भव' इत्याकाङ्क्षायां-प्रीतिश्च तारतम्यवतीत्यादिना पूर्वमुक्तं स्मारयति भक्तौ

११० त्विति, भोग्यस्य आकारः-भोग्याकारः प्रियत्वमिति यावत्, आविर्भावो-निष्पत्तिः, प्रियत्वतारतम्यस्य प्रीतितार-तम्याधीनत्वात्प्रीतितारतम्येतात्पर्यम्, तथाच प्रीतिरूप-भक्तितारतम्यमेव भक्तिविषये कामनायां हेतुरित्यर्थः. ननु यादृशी भक्तिस्त्वयेष्यमाणत्वेनाभिमता तद्रूपवेदनविषयत्वमे-

११५ वेष्यमाणायां विविदिषायां विशेषोऽस्त्वित्याशङ्कते इहा-पीति, विविदिषायामित्यर्थः. काम्यत्वमिति, विविदि-षाया इति शेषः. तथाविधेति, अतिशयित प्रीतिरूप-त्वात्मकोय दृश्यमाणविविदिषायाः प्रकारतया विषयः तद्विशेषितं यद्वेदनं तत्कामनामन्तरेण तद्विषयविविदिषा-

१२० कामनापि न सम्भवतीत्यर्थः. नन्विच्छार्थङ्कर्मानुष्ठानस्या-त्माश्रयग्रस्तत्वे क्वचिदपीच्छा न सम्भवेत्, इच्छाहेतुभूत-कर्मानुष्ठानायोगात्, न चेच्छायाविषयवैलक्षण्यज्ञानमात्रा-धीनत्वम्, वैलक्षण्ये ज्ञातेपि कस्यचिदिच्छानुत्पत्ति दर्श-नात्, अतः कस्यचिदिच्छोत्पत्तेः कर्म हेतुकत्वमाश्रयणी-

१२५ यम्, तच्चैवं सत्यनुपपन्नमित्यत आह अतस्सिद्धमिति. अस्मात्कमते इच्छार्थङ्कर्मानुष्ठानन्नास्त्येव, भोगादृष्टोद्बोधित

पूर्वकयजनादिविविदिषावेलचण्यज्ञानादिच्छोत्पत्त्युपपत्तेः. न चाज्ञात सुकृतवशाद्धर्मरुचिवद्यज्ञादिनावेदनेच्छासिद्धिरिति वाच्यम्, सकर्थव्ययायाससाध्यानां यज्ञादीनामज्ञातसुकृतहेतु-
१३० रूपत्वासंभवात्, यज्ञेन विविदिषन्तीति वाक्यस्य ह्यर्थ-श्चिन्त्यते, अतो बुद्धिपूर्वकमेव एतद्वाक्यविहित यज्ञा-द्यनुष्ठानम्, तदिदमुक्तम् यज्ञादिकर्मेति, विविदिषा-साधनत्वेन न विहितमिति च. अत्र विविदिषन्तीत्यस्य सन्निधौ मनसैवानुद्रष्टव्यमिति विशदवेदनं विहितम्,
१३५ "एतमेवविदित्वा मुनिर्भवति" इति स्रुतम्, अतो विधिस्तुतिविषयस्यैव वेदनस्यात्र विध्यन्तराकाङ्क्षा, न तु तदुभयरहितायाविविदिषायाः" इति तत्त्वटीकोक्तमप्यनु सन्धेयम्.

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगत-परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायां चण्डमारुताख्यायां विविदिषासाधनत्वभङ्ग-प्रपञ्चस्कन्धः ॥

श्रीमते महाचार्याय नमः ।

---

श्रीमते महाचार्याय नमः ।

शतदूषणीव्याख्याने चण्डमारुते ।

## शब्दजन्यप्रत्यक्षभङ्गो नाम सप्तमस्कन्धः ।



सर्वाध्यक्षोऽप्यनध्यक्षो देहिनां यस्य सूक्तिभिः ।
अध्यक्षति हरिस्तस्मै नमो वेदान्तसूरये ॥

अतिदृशमखिलस्य तत्पुराणं
निगमगुहाहितमग्र्ययोगगम्यम् ।
5 मम हृदि भव हर्षशोकमुक्त्यै
दधतु रमानिधिदेशिकेन्द्रवाचः ॥

परेषां शब्दजन्यत्वेनाभिमते ब्रह्मापरोक्ष्ये किमक्षाणामेव कारणता, उत शब्दस्य, आद्ये दोषमाह **विभूत्यंश** इति, अक्षयोग्ये विभूत्येकदेशेऽपि (मनः) चक्षुः प्रभृतीन्यक्षाणि 10 प्रतिहन्यन्ते किमुतायोग्ये ब्रह्मणीति भावः. द्वितीये दोषमाह **श्रुतिरिति,** जात्यन्धानाकृत इति शेषः, लोके उपदेष्टारः जात्यन्धानाकृते यथारूपमुपदिशन्ति तथा श्रुतिरपि नः कृते यमुपदिशतीत्यर्थः. इवेत्यनेनोपदेशद्वयस्यापि परोक्षत्वेन सादृश्यं विवक्षितम्. अनेन वादार्थसङ्ग्रहः. **निजाध्यक्षेत्यादि,** 15 स्वतस्सिद्ध. सर्वसाक्षात्कारो भगवान् परोक्षदुरर्थमस्मदुक्त-

सदर्थञ्च जानन् तत्पारितोषिकतया स्वस्य स्वाधीनतया स्वविषयस्थानमप्रकाशन्ददातित्यर्थः. अस्वपरोक्षप्रकाशः, स इन्द्रियकरणक एव स्यात् न वाक्यकरणक इत्यत्राह न चेति, इन्द्रियजन्यः इन्द्रियकरणक इत्यर्थः. वाक्यस्येति, इन्द्रियस्य
२० वाक्यनिरपेक्षत्वादिति भावः. अन्यतरेणेति, इन्द्रियवाक्ययोः पृथक्कारणत्वेन क्लृप्तयोरन्यतरेण कार्योपपत्तावन्यतरस्मिन्नन्यतर सहकारित्वकल्पनायाम्मानाभावादित्यर्थः, रत्नतत्त्वाधिगमेऽपि शाब्दज्ञान संस्कार सचिवेन्द्रियस्यैव हेतुत्वमिति भावः. किन्नामेति, यद्यपि पूर्ववादिना शब्दस्य यदिन्द्रियम्प्रतिसह-
२५ कारित्वमुच्यते, तस्यैवेन्द्रियस्य शब्दम्प्रति सहकारित्वस्याने-नाभिधानान्नैतच्छङ्कावकाशः, अथापि तटस्थस्येयमाशङ्केति न दोषः. यद्वा चक्षुरादीनाम्प्रत्येकं व्यभिचाराच्छब्दज्ञाने च वैजात्यस्याक्लृप्तत्वात् नेन्द्रियस्य वाक्यसहकारित्वं सम्भवति, करणत्वन्तु सम्भवति, प्रत्यक्षे चाक्षुषस्पर्शनादि वैजात्यस्य क्लृप्त-
३० त्वात्, ननु शब्दस्य सहकारित्वेऽपि शब्द जन्यतावच्छेदक-मिन्द्रियजन्य ज्ञानविशेषे कल्पनीयमिति चेत्, न, तथापि शब्दजन्यतावच्छेदकस्य एकस्यैव कल्पनाच्चक्षुरादीनान्त्वननुगमात् जन्यतावच्छेदकमनेकङ्कल्पनीयमिति वादिन एवाशङ्केति. मनस इति, तथाच तस्यान्न पूर्वोक्त गौरवमिति भावः.
३५ विपरिवर्तापादनेऽपि शब्दकरणकत्वनिर्धारणङ्कथमिति पृच्छ-ति तथापीति. अन्धस्येति, तत्र चक्षुरादेरव्यापारात् मनसश्च क्वापि करणत्वानङ्गीकारात् शब्दस्यैव तत्र करणत्वं

वार्थमिति भावः. **प्रत्यक्षप्रत्ययादिति,** प्रत्यक्षत्वमानुभविकमिति भावः. यद्यपि नेदं रजतमितिवन्न प्रत्यक्षबाधः,
४० तथापि यौक्तिकबाधोऽस्त्येव, मनस्संवलितसामग्र्याश्शब्दसंवलितसामग्र्याश्च विद्यमानतया परोक्षापरोक्षरूपकार्यद्वयस्यावश्यकत्वात्, अतो दशमोऽस्मीत्येकैवापरोक्षप्रतीतिरिति बुद्धेर्भ्रमत्वमवर्जनीयमेवेति शङ्कां परिहरति **न च संश्लव** इति. **भेदाग्रहा**दिति, भ्रमस्याप्युपलक्षणम्. **कदाचिदि**ति,
४५ तत्र—तादृशस्थले, करणान्तरसन्निधानस्थले धीभेदानुपलम्भेन मनसः करणान्तरसहकारित्वमेव न पृथक्करणत्वमित्यर्थः. यद्यपि मनसः करणत्वं स्वमते कुत्रापि नास्त्येव, तथापि परेण स्वमतेन शङ्किते तदभ्युपगमेन परिहृतमिति ध्येयम्. **क्वेति,** शब्दस्य प्रत्यक्ष जनकत्वन्न विरुद्धमित्यर्थः. **अस्तीति,**
५० स्वीत्वविशेषितक्लीत्वमित्यर्थः. नन्वस्माभिरज्ञातत्वं यद्यपि न दोषः, तथाप्यत्यन्ताज्ञातत्वे वस्तुसत्त्वेव न स्यादित्यत आह **न चास्येति. निवर्त्त्येति,** तज्ज्ञाननिवर्त्त्यस्य मिथ्यात्वं तज्ज्ञानस्य साक्षात्त्वमन्तरेणानुपपन्नमिति प्रदर्शनार्थं निवर्त्यपदम्, प्रपञ्चरूपस्य निवर्त्यस्य मिथ्यात्वं तत्त्वमस्यादिवाक्य-
५५ स्यापरोक्षजनकत्वमन्तरेणानुपपन्नमित्यर्थः. मिथ्यात्वं ज्ञाननिवर्त्यत्वञ्च प्रपञ्चस्योपपादयति **स्वत इत्यादिना**. ज्ञानमात्रनिवर्त्यत्वे युक्तिमप्याह **मिथ्याभूतस्येति,** मिथ्याभूतस्य ज्ञानमात्रनिवर्त्यत्वं युक्तञ्चेत्यन्वयः. **मनसोऽपीति,** सहकारिविशेषमनोग्राह्यमोऽहमिति ज्ञानस्य मनसा असम्भवादित्यर्थः

६० तत्सहकृत मनस एव करणत्वङ्कुतो न स्यादित्यत आह **मनस-श्चेति,** यद्यपि शब्दस्यापि तादृश साक्षात्कारकरणत्वमसिद्धम्, तथापि तादृश ज्ञानकरणत्वे न विवादः, अतस्तज्जन्यज्ञानस्य साक्षात्त्वमात्रङ्कल्पनीयम्, मनसस्तु तादृशज्ञानकरणत्वन्तज्जन्य-ज्ञानस्य साक्षात्त्वञ्च कल्प्यम्, अतो लाघवाच्छब्दस्यैव साक्षात्-
६५ कारकरणत्वकल्पनं युक्तमिति भावः. **तथात्व इति,** मनस-स्तादृश साक्षात्कारकरणत्वस्य दृष्टचरत्वे श्रवणादिसापेक्षापरो-क्षज्ञानेप्यन्यत्र क्लृप्तस्य मनस एव करणत्वेन शब्दस्य करणत्वा-भावाच्छ्रवणादिनिरपेक्षपरोक्षज्ञाने शब्दस्य करणत्वङ्गाह्यम्, तथाच श्रवणादिवैयर्थ्यमिति भावः. **अतएवेति,** मनोग्रा-
७० ह्यत्वाभावे श्रुतिः प्रमाणमित्यर्थादुक्तम् भवति. **भावनेति,** भावनासहकृतमनोजन्यत्वेन पराभिमतस्येत्यर्थः. **पथिकेति,** प्रोषितचिन्तितायाः प्रियतमायाः साक्षात्कारवदित्यर्थः. पूर्व-म्परोक्षज्ञानस्य निवर्तकत्वादर्शनादपरोक्षपरिशेषः, प्रमाणान्त-राणामप्रवृत्तेर्वाक्यपरिशेषश्चोक्तः, इदानीम्परोक्षस्याक्षजस्य च
७५ निवर्तकत्वा (दर्शनात्) सम्भवात् अपरोक्षत्वं शब्दजन्यत्वञ्च परि-शेषयति **किञ्चेति. न्यूनत्वाच्चेति,** परोक्षभ्रमस्यापरोक्ष-ज्ञाननिवर्त्यत्वदर्शनात्ततो न्यूनबलत्वादित्यर्थः, न्यूनत्वात्परोक्ष-मक्षमम् समत्वादक्षजञ्च न क्षममित्यर्थः. न केवलम्परिशेषात् साक्षात्त्वशब्दकरणत्वयोस्सिद्धिः, किन्तु श्रुत्यापीत्याह **साक्षा-**
८० **त्कारस्य चेति. निचाय्येति,** चायृधातुर्दर्शनार्थः. **तस्मा इति,** करिष्यमाणोपदेश एव तत्र दर्शयतिनोक्त इति

भावः. **वेदान्तेति,** सूपसर्गः प्रत्यक्षपर इति भावः. **न मांसेति,** मांसचक्षुर्निषेधाच्छ्रुतिचक्षुरनुमतमिति भावः. **विगीतमिति.** नन्वयमसिद्धो हेतुः, वाक्यार्थज्ञाने

८५ वाक्यस्यातीतादिरूपत्वेनाजनकत्वात्तज्ज्ञानस्यैव जनकत्वात्, प्रयोज्यत्वमात्रविवक्षायान्तल्लिङ्गिकायान्तत्पक्षिकायाञ्च व्यभिचार इति चेन्न, अनुमित्याद्यन्यत्वेन विशेषणात्, यद्वा, तत्त्वमसिवाक्यप्रत्युच्चारणं भिन्नमेव, तथा च यस्य तत्त्वमसिवाक्यस्य न लिङ्गत्वं नापि पक्षत्वन्नापि स्मृतिः तच्छ्र-

९० वणजन्यं वाक्यार्थज्ञानं पक्षः, तद्वाक्यप्रयोज्यज्ञानत्वं हेतुरिति. तत्त्वमस्यादिवाक्यजन्यकिञ्चिज्ज्ञानवृत्तित्वसाधने दोषमाह **सिद्धसाधनादिति.** तत्त्वमस्यादिवाक्यजन्ययावज्ज्ञानवृत्तित्वसाधने दोषमाह **पूर्वोक्तेति. न चेति,** अपरोक्षत्वमग्निहोत्रादिवाक्यजन्यज्ञानवृत्तौत्यपि प्रयोक्तु-

९५ मशक्यमित्यर्थः. **फलकामनाया** इति, अनेनेदम्फलम्मे भूयादिति कामनाया इत्यर्थः. **फलेति,** फलसम्बन्धः फलजननयोग्यता. **अत एवेति,** पूर्वमनुष्ठानमित्यग्निहोत्रादिक्रियाविवक्षिता, प्रवृत्तिस्तु तज्जनककृतिरिति भेदः. **इह त्विति,** निवर्त्त्यमिथ्यात्वान्यथानुपपत्तिरि-

१०० त्यर्थः. प्रतिबन्धो—व्याप्तिः. ननु महाविद्यानां स्वपरपक्षसाधारण्यात् स्वेनैव सत्प्रतिपक्षितत्वात् कथन्ततस्साध्यसिद्धिरित्यत आह **स्वपरेति.** यद्यपि स्वपरपक्षसाधारण्यम्महाविद्यानां स्वभावः, तथाप्यनुकूलतर्कतदभावाभ्यां साध्य-

सिद्धिंतदभावावित्यर्थः. **योगीति,** बाह्यविषयत्वमाह्य-
१०५ विशेष्यकत्वम्, ज्ञानाप्रत्यासत्तिकत्वे सतीति वा विशेष-
णीयम्. ननु कथमिष्टत्वम्, "निर्विशेषत्वसामान्य"-
मिति न्यायेन चक्षुरादिविशेषानन्तर्भावे प्रत्यक्षजनक-
सामान्यान्तर्भावस्यापि बाधादित्याशङ्क्यसामान्यतः प्रत्य-
क्षान्तर्भावे सति चक्षुराद्यवान्तरभेदाश्रयणवच्छब्दरूपावा-
११० न्तरभेदाश्रयणमपि सम्भवतीत्याशयेनाह **ऐकराम्य** इति.
**तदेवत्विति,** ऐकराम्यमित्यर्थः. तद्दर्शनस्य—साक्षात्कार-
जनकत्वदर्शनस्येत्यर्थः. **यत्तावदिति,** नरप्रकृतत्वाभार्थ-
मङ्कुरशब्दप्रयोगः. **यत इति,** अपरोक्षार्थविषयत्वप्रयुक्त-
त्वाभ्युपगमात् ज्ञानापरोक्ष्यस्येति भावः, न च सर्वसंविदा-
११५ त्कदाचिदापरोक्ष्यात् तद्विषयापरोक्ष्यं स्यादिति वाच्यम्,
वह्न्यनुमितेरप्यापरोक्ष्यापातात्. **न चेति,** वस्तुतो ज्ञानस्य
स्वप्रकाशत्वेऽपि तत्स्वप्रकाशत्वस्य तेन ज्ञानेनाग्राह्यत्वान्न
तदापरोक्ष्यमिति भावः. **तदैक्येऽपीति,** उपहितसंवि-
दाङ्कासाक्षित् अन्यकालीनत्वात्कासाक्षिव्यधिकरणत्वाच्च
१२० पारोक्ष्यमिति भावः. ननु संवित्स्वप्रकाशेति वाक्यजन्य-
ज्ञानस्य स्वप्रकाशत्वेनापरोक्षत्वात्तज्जनकत्वेनापरोक्षहेतुत्वं
सिद्धमेव, न च प्रत्यक्षांशे जनकत्वमेव साध्यम्, अन्यथा
सिद्धसाधनात्, वाक्यस्य विषयांश एव हेतुः न स्वजन्य-
ज्ञानांशेऽपि, अतः प्रत्यक्षजनकत्वमात्रस्यैवेति वाच्यम्, तदंशे-
१२५ ऽपि वाक्यातिरिक्तकारणादर्शनेन तस्यैव कारणत्वादिति

शङ्कते **वाक्येति. तदीति,** तथा च सिद्धसाधनं हेतु-
विशेषणवैयर्थ्यञ्चेति भावः. ननु विषयप्रकाशांशा-
भिन्नप्रत्यचांशजनकत्वं साध्यम्, अनुमानादिषु वह्निमा-
निति जानामीत्यत्र वह्निमानित्यंशो विषयांशः, जाना-
१२० मीत्यंशस्स्वप्रकाशांशः, संवित्स्वप्रकाशेत्यत्र तु तज्जन्यज्ञान-
स्यापि संवित्त्वेन विषयान्तर्भावात्तत्प्रकाशेनैव स्वव्यवहा-
रोपपत्तौ जानामीत्यंशान्तरकल्पकाभावात् स्वप्रत्यचत्वप-
स्वात्मप्रकाशांशो विषयप्रकाशांशस्याभिन्न एवेत्यदोष इति
शङ्कते **सत्यमिति. नेति,** संविदित्यतीतानागतस्वपर-
१२५ साधारणसंविन्मात्रगोचरविषयप्रकाशांशमात्रेण जानामीति
तदातन व्यक्तिमात्रगोचर तदाश्रयपुरुषविशेषसम्बन्धित्वादि-
विशिष्टव्यवहारस्य जानामीत्यंशान्तरमन्तरेणासम्भवात्,
ततश्च दृष्टान्तासिद्धिरिति भावः. यद्यपि विषयांशेऽपि
स्वस्यान्तर्भावोऽस्त्येव, तथापि विषयप्रकाशांशस्संविदन्तर-
१४० वत् एतत्संविदंशेऽपि परोच एवेति भावः, स्वप्रकाशतया
प्रत्यचत्वावश्यभावेन विषयप्रकाशांशस्यैव तत्संविदंशे प्रत्यच-
त्वमित्याशङ्कितुर्भावः. यद्वा, ननु विषयप्रकाशांशे स्वप्र-
त्यचत्वजनकत्वं साध्यं, विषयप्रकाशांशस्य न पूर्ववद्द्यांशो
विवचितः, किन्तु विषयावगाह्यंशः, इदञ्च साध्यमनु-
१४५ मानादिष्वस्ति, इह त्वस्ति, स्वस्यापि विषयतया स्वप्रका-
शांशस्यैव विषयावगाहितया विषयप्रकाशांशत्वादिति
शङ्कते **सत्यमिति. नेति,** किं सर्वविषयावगाह्यंशे

यत्प्रत्यक्षत्वज्जनकत्वं ,साध्यम्, यत्किञ्चिद्विषयावगाह्यंशे प्रत्यक्षजनकत्वं वा, नाद्यः वाक्यस्य स्वप्रकाशांशस्य च
१५० सामान्यविशेषविषयतया भेदस्य दर्शितत्वेन सर्वविषयावगाह्यंशे प्रत्यक्षत्वाभावात् साध्यवैकल्यमित्यर्थः. न द्वितीयः, अतीन्द्रियत्वावच्छिन्नयत्किञ्चिद्विषयावगाह्यंशप्रत्यक्षजनकत्वव्यापकस्य वेद्यांशान्तर्भूतज्ञानजनकत्वे सोपाधिकत्वादिति भावः. प्रमैव कुतो न स्यादित्यत आह **परोक्षेति**. प्राग-
१५५ विदितस्वात्मदशमत्वस्य यदि कस्यचिद्विशिष्टेऽपि प्रत्यक्षताधीः, तदा भ्रान्तिरेव सेत्याह **उद्देशे(श्ये)ति**. अतः प्राचीनप्रत्यक्षाभेदभ्रमस्तत्रेति भावः. एतेन कदाचिदपि तत्र धीभेदानुपलम्भादिति पूर्ववाद्युक्तं निरस्तम्, करणान्तरसन्निधानात् प्राक्तनया प्रत्यक्षोत्पादेन तदभेदभ्रम-
१६० सम्भवात्. **आपरोक्ष्यादेरिति**, परोक्षत्वापरोक्षत्वयोः ज्ञानभेदेनाविरोधात् तन्निबन्धनः प्रत्यक्षे विषये परोक्षप्रकाशव्याघातविरह इति भावः. **विषयधर्मत्वेऽपीति**, विषयधर्मत्वेऽपि तदनिबन्धने एव पारोक्ष्यापारोक्ष्ये ज्ञानेऽपिवाच्ये, इन्द्रियलिङ्गादिजन्यज्ञानेषु वैलक्षण्यानु-
१६५ भवात्, तथा च एकस्मिन्नेव करणद्वयप्रवृत्तौ परोक्षापरोक्षरूपज्ञानद्वयमविरुद्धमिति भावः. **कालभेदेनेति**, परोक्षे विषये सत्यपि श्रवणापरोक्षज्ञानस्य श्रवणानन्तरपरोक्षज्ञानस्य च तत्त्वमस्यादिवाक्येष्वङ्गीकारादिति भावः. विपरीतवासनायां कथं परोक्षमपि ज्ञानमित्यत आह

१७० विपरीतेति, मननादिभिः विपरीतवासनायामनिवृ-
त्तायामपि वाक्यात्प्रथमतः परोक्षज्ञानस्य लयोक्तत्वादि-
त्यर्थः. (व्याख्यानान्तरम्, यदि प्रत्यक्षेति, शुक्तिप्रकाशो-
ऽपि परोक्ष एव स्यादिति भावः). ननु न वयमपरोक्षे
परोक्षप्रकाशे शुक्तित्वेनापरोक्षे परोक्षरजतप्रकाशमापाद-
१७५ यामः, किन्तु विरुद्धयोरविरोधाङ्गीकारे शुक्तित्वे भास-
मानेऽपि रजतभ्रमस्स्यादिति ब्रूमः इति शङ्कामनूद्य
परिहरति अथ पुनरिति. शुक्तित्वादीति, प्रति-
बन्धकाभावस्याकारणत्वमतेन, कारणत्वमतेनाह विशेषेति.
इहत्विति, विषयगतमपरोक्षत्वम्परोक्षज्ञाने न प्रतिबन्धकं
१८० नापि तदभावः परोक्षज्ञानहेतुः मानाभावादिति भावः.
तथाविधेति, परोक्षविषयप्रयोग इवापरोक्षविषयप्रयोगे-
ऽपि तच्छक्तेस्तदवस्थत्वादिति शब्दरूपा सामग्री दर्शितेत्यर्थः.
अत एवेति, अपरोक्षे विषयेऽपि परोक्षप्रत्ययस्याङ्गी-
कारात् व्याप्त्यभावात् प्रशिथिलमूलस्तर्क इत्यर्थः.
१८५ विपर्यय इति, विपर्यये पर्यवसाने तु पराभीष्टं
स्वाभीष्टं साधयति, यथा दृश्यते च धूमस्तस्मादग्निमा-
निति. स्वानिष्टप्रसञ्जकमित्यत्र हेतुमाह प्रसञ्जके त्विति,
प्रसञ्जकविपर्यये पर्यवसानात् प्रसञ्जकस्येष्टत्वे तदभावस्या-
निष्टत्वात् अनिष्टपर्यवसानमित्यर्थः. परानिष्टमेव प्रसञ्ज-
१९० नीयमित्यत्र हेतुमाह स्वाभीष्टस्येति, आपाद्यविपर्ययस्य
स्वेष्टसाधनत्वादापाद्यस्य चेष्टत्वे तदभावासिद्धेः न स्वेष्टसिद्धि-

रित्यर्थः. **उभयमिति,** प्रसञ्जकं स्वेष्टम्प्रसञ्ज्यञ्च परेष्ट-
मित्यर्थः. प्रसञ्जकस्य स्वेष्टत्वमुपपादयति **स्वत इति.**
**मिथ्यैतदिति,** परोक्षज्ञानस्य मिथ्यात्वेन तदभावस्य पर-
१९५ मार्थत्वेन इष्टत्वात् परमार्थत्वेन इष्यमाणाभावप्रतियोगि-
त्वेनानिष्टत्वमुपपद्यत इति भावः. **पश्चात्तनेति,** श्रव-
णाद्यनन्तरभाविप्रत्यक्षस्यापि मिथ्यात्वात् तदप्यनिष्टमि-
त्यनेन तर्केणानिष्टमेव सिध्यतीत्यर्थः. किञ्चाभावस्य
सत्त्वादेव हि प्रतियोगिनः परोक्षज्ञानस्यानिष्टत्वं वाच्यम्,
२०० अभावस्य सत्त्वञ्च मिथ्यात्वस्य शुक्तिरजतयोरिवाविरोधा-
पादकत्वाद्वाच्यम्, तच्च न सम्भवति सत्यमिथ्यार्थयोर्विरुद्ध-
त्वात्, अन्यथा बाध्यबाधकभावानुपपत्तेः, तस्मात्परोक्ष-
तदभावयोरविरोधासिद्धेः परोक्षाभावासंभवाच्च प्रसञ्जक-
स्यानिष्टत्वमित्याह **शुक्तावित्यादिना** तवाविरोधापादकञ्च
२०५ भवतीत्यन्तेन. स्मर्तुमर्हसीत्यनन्तरं तच्च सम्भवतीति शेषः.
**सत्यमिति,** सत्यं शुक्तित्वमित्यन्वयः. बाध्यत्वेनाभिधीयत
इत्यत्र विरोधादित्यनुषञ्जनीयम्. **अविरोधापादकञ्च**
भवतीति, परोक्षतदभावयोरिति शेषः. परोक्षज्ञानस्या-
परोक्षभ्रमानिवर्तकत्वेऽपि शाब्दज्ञानसचिवेन्द्रियेणापरोक्ष-
२१० ज्ञानादेव भ्रमनिवृत्तिस्स्यादित्यत्राह **दुष्टेन्द्रियेति,** दोष-
माहात्म्यादाप्तोपदेशे सत्यपि कश्चिच्च तत्त्वापरोक्ष्यमुत्पद्यते,
किन्तु भ्रम एवेत्यर्थः. एवं विरुद्धयोस्सन्निपाते शुक्ति-
तत्त्वज्ञाने सत्यपि रजतभ्रमस्स्यादित्यापादनार्थमभिप्रेत्य तत्र

दोष उक्तः, इदानीन्त्वपरोक्षेऽपि परोक्षप्रकाशोऽस्ति
२१५ चेच्छुक्तित्वेनापरोक्षेऽपि रजतत्वेन परोक्षं स्यादित्यापाद-
नार्थमभिप्रेत्य दोषमाह **तथेति**, अयोग्यताज्ञानप्रति-
बन्धकत्वेनेति भावः. यद्वा अप्रामाण्यशङ्कादिशा विवक्षिता.
**उदेत्येवेति**, तत्रानुभव एव मानमिति भावः. **विशेषत**
**इति**, प्रत्यक्षयोग्यार्थं विशेषतो दृष्टन्तद्योग्यार्थं सामा-
२२० न्यतो दृष्टमिति विभागाभिप्रायेणोक्तम्. **तथाविधेति**,
अग्न्यादिवत्प्रत्यक्षार्थगोचरेष्वित्यर्थः. तदानीम्प्रत्यक्षे परोक्ष-
प्रकाशो व्याहतः, अग्न्यादिर्न तथा, ब्रह्म तु तथैव, नित्या-
परोक्षत्वादिति शङ्कते **योग्यतेति**. अग्निरपि तदानी-
मारण्यकानां योगिनामीश्वरस्य हिरण्यगर्भादेश्च प्रत्यक्ष
२२५ इत्याह **यस्य कस्यचिदिति**. तत्प्रत्यपरोक्षे तस्य परोक्षं
व्याहतमिति शङ्कते **तथापीति**. **तर्हीति**, तत्र परोक्ष-
ज्ञानस्य व्याघाताभावान्न साक्षात्कारसमर्थनमित्यर्थः.
**यत्पुनरिति**, यदि प्रत्यक्षे परोक्षव्याघात इत्येवोच्यते;
प्रत्यक्ष इति च प्रत्यक्षयोग्यत्वं वा व्याहतत्वेनाभिमत-
२३० परोक्षज्ञानानन्तरमपरोक्ष इति वा विवक्षितम्, तथा, च
दशमत्वस्य प्रत्यक्षयोग्यत्वात् अनन्तरम्प्रत्यक्षदर्शनाद्वा परोक्ष-
व्याघातात् अपरोक्षसम्भव इष्यत इत्यर्थः. ननु तदा प्रत्यक्षे
परोक्षप्रकाशस्यैव व्याघातः, यदा च दशमत्वम्प्रत्यक्षन्तदा
तत्रापरोक्षज्ञानसमर्थनमिति स एव दृष्टान्त इत्यत्राह
२३५ **यदा चेति**. **ततश्चेति**, शूद्राणामत्रैवर्णिकत्वेऽपि अनु-

मात्राधिकारस्यानपायात् आनुमानिकापरोक्षज्ञानस्(व)त्त्वा-
त्तेषामपि ब्रह्मविद्याधिकारस्यादिति भावः, आदिशब्देन
श्रवणादिवैयर्थ्यं विवक्षितम्. **किञ्चेति**, न च साक्षित-
त्तदीयत्वाभावात् तन्प्रत्यपरोक्षत्वञ्चेति वाच्यम्, शास्त्रार्थन्न
२४० जानामीत्यादिरूपेणाज्ञानावच्छेदकार्थव्यवहारजनकस्य सा-
क्षिणोऽपि तदीयत्वादिति भावः, न च वृत्त्याऽपरोक्षत्वं
विवक्षितम्, ब्रह्मणस्ततोपरोक्षत्वेनातथात्वादिति भावः.
**दृष्टान्तासिद्धिरिति**, ननु स्वतोपरोक्षार्थमात्रविषयत्वञ्च
हेतुः, तादृशार्थविषयत्वमात्रन्त्वात्मस्वरूपमादायास्त्येवेति
२४५ चेत्, किमयं हेतुस्स्वतोऽपरोक्षार्थांशे अपरोक्षजनकत्व-
साधकः, उत तदर्थमात्रे, न द्वितीयः, त्वङ्घटस्य तिष्ठथ
इत्यत्र घटांशेऽप्यपरोक्षतापत्तेः, नाद्यः, दशमस्त्वमसीत्यादि-
वाक्योदाहरणायोगात्. **अत एवेति**, वाक्यस्यापरोक्ष-
ज्ञानजनकत्वासिद्धेः, अपरोक्षार्थगोचरत्वङ्कारणतावच्छेदक-
२५० मित्यपि निरस्तमित्यर्थः. **सत्यमेव हीति**, संसारस्य
सत्यत्वम्भगवत्सङ्कल्पनिवर्त्त्यत्वञ्च साधयिष्याम इत्यर्थः, सत्य-
त्वसाधनान्मिथ्यात्वस्यासिद्धिस्सिद्धा, सत्यत्वे वा मिथ्यात्वे
वा प्रमाणबलादीश्वरसङ्कल्पनिवर्त्त्यत्वस्यावश्यकत्वादन्यथा-
सिद्धिस्सिद्धा. "**तरति शोकमात्मविदि**"त्यादि, ननूपा-
२५५ सनस्यापि ज्ञानत्वात्कथं ज्ञानमात्रनिवर्त्त्यत्वस्य निरास इति
चेन्न, ध्यानादिभिन्नस्यैव परेण ज्ञानत्वाङ्गीकारात्तन्निवर्त्त्य-
त्वस्यैव तदिष्टत्वात्तस्यैवेह निरस्तताभिधानेन. दोषाभावात्;

किञ्च उपासनादिना निवृत्तौ मुमुक्षादिसहकारिणोऽपे-
क्षितत्वाच्च ज्ञानमात्रनिवर्त्त्यत्वम्, तन्मते तु उपासनादि
२६०, सर्वं ज्ञानार्थमपेक्ष्यते, ज्ञानेन तु बन्धनिवृत्तौ न किञ्चिदपे-
क्ष्यत इति. युक्तिः—युक्तता. व्यावहारिकमिति, तथा चं
हेतुसिद्धेः न मिथ्यात्वसाधनमिति भावः. किम्मिथ्यार्थोऽस्ति
उत न, द्वितीय आह प्रध्वंसो हीति, विद्यमानतामात्रं
सत्यत्वमतिरिक्तम् अनिरूपणादिति भावः. आद्य आह
२६५ सत्यपीति, तेन—ज्ञानेनेत्यर्थः. अन्यथेति, न चेष्टा-
पत्तिः, सुषुप्तिकाले मुद्गरादिना शुक्तिनिवृत्तौ यदि
रजतस्यापि निवृत्तिः, तदा ज्ञानानिवर्त्त्यत्वप्रसङ्गात्,
अनिवृत्तौ निरधिष्ठानाध्यासप्रसङ्गात्. दूषणान्तरमाह
संविदिति, भ्रान्तिज्ञानेत्यादिदोषस्य तत्त्वज्ञानप्रतिबन्ध-
२७० कत्वादिति भावः. सम्भवे वेति, तत्त्वज्ञानोत्पत्त्यर्थं हि
भ्रान्तिसामग्र्युच्छेदकल्पनम्, तस्यां सत्यामपि तत्त्वज्ञानो-
त्पत्तौ किन्तदुच्छेदकल्पनेनेत्यर्थः. द्वितीयप्रत्यक्षज्ञानोत्पत्तेः
प्राक् तत्सामग्र्यनुवर्त्तते, न वा, द्वितीये दोषमाह
तत्सामग्रीति, साक्षात्कारसामग्र्यभावे भ्रमसामग्र्युच्छेदे-
२७५ ऽपि तत्त्वसाक्षात्कारानुत्पत्तेरित्यर्थः. आद्ये दोषमाह
तस्याश्चेति, तत्त्वसाक्षात्कारसामग्रीसत्त्वे भ्रमसामग्री-
सत्त्वेऽपि प्राथमिकतत्त्वापरोक्षवत् द्वितीयादेरप्युत्पत्ति-
सम्भवादित्यर्थः. नित्येति, नित्यत्वात्मकस्वाभाविकत्व-
मित्यर्थः. किम्प्रतिबन्धकनिवर्त्तकमित्यज्ञानमेव, उत

२८० स्वरसवाहि, आद्ये दोषमाह **अन्योऽन्येति**. द्वितीये दोषमाह **नित्येति**, नित्ये प्रतिबन्धकस्याभावात् तन्नि- वर्त्तकत्वस्वारसिकप्रत्यक्षस्य कल्प्यमित्यर्थः. ननु भ्रान्तेः पुनरप्यननुत्पादार्थं तत्सामग्र्युच्छेदकत्वप्राथमिकप्रत्यक्षस्य कल्पनीयमिति चेन्न, सामग्र्या मिथ्यात्वे तस्या अपि

२८५ स्वरूपतः सत्त्वाभावेन प्रच्युत्यसम्भवात् तस्या अपि निवृ- त्तिस्तद्भ्रान्तिकारणनिवृत्तिरित्येव वाच्यम्, तच्चाप्येवमि- त्यनवस्था, सत्यत्वेनापरोक्षज्ञाननिवर्त्यत्त्वन्त्वेष्टमिति भावः. स्वाभाविकप्रत्यक्षप्रतिबन्धकतया तदुच्छेदकल्पनमित्यत्र प्रागुक्तविकल्पे प्रथमशिरसि दूषणमाह **प्रतिबन्धे**ति.

२९० द्वितीयेऽपि पूर्वोक्तविकल्पमभिप्रेत्यप्रथमशिरसि दोषमाह **प्रत्यक्षमिति**, प्रत्यक्षभ्रान्तिकारणोच्छेदे सत्येव वाच्यम्, तस्य त्वया प्रत्यक्षप्रतिबन्धकतोक्तेः, तदुच्छेदस्तु यदि प्रत्यक्षेण स्यात् तदान्योऽन्याश्रयं इत्यर्थः. द्वितीय आह **प्रतिबन्ध इति**, आत्मरूपे अपरोक्षे न प्रतिबन्धकं नित्यत्वादित्यर्थः.

२९५ क्वचित्तु न द्वितीय इत्यतः प्रागेवान्योऽन्याश्रयणादिति पाठः, स तु सुगमः, सङ्गत्योऽपि तदनुसारेण योज्यः. **तदनुवर्त्तन**स्येति, प्रागभावपरि(कल्पनं) पालनं हि सत्यां सामग्र्यां कार्यविलम्बायोगात् प्रतियोगिकारणविघटनेनैव वाच्यम्, तच्च निरस्तमित्यर्थः. भ्रमाननुवृत्तिरेव सत्यताध्य-

३०० वसायशैथिल्यन्तच्च परोक्षज्ञानाद्वेति शङ्कते **परोक्षेति**; **उक्तत्वादिति**, प्रत्यक्षसिद्धेऽपि शुक्तेरत्त्वे विप्रलम्भक-

वाक्याद्रूजतधीरुदेतीत्युक्तत्वादित्यर्थः. **अपरोक्षेऽपीति,** भ्रान्तिरपीत्यन्वयः. **एतदिति,** अपरोक्षज्ञानद्वारा एतदर्थस्य श्रवणाद्युपायस्योपदेशायोगात्. प्रत्यक्षपरिशेषम-
२०५ भ्युपगम्य वाक्यपरिशेषन्दूषयति **अस्तु वेति. प्रत्यगिति,** आदिशब्देन मनस्त्यागहेतुस्सोऽहमस्मीत्यस्मिन्नर्थे स्वातन्त्र्यमनुमानपरित्यागहेतुरापरोक्ष्यविद्वेषित्वञ्च गृह्यते, प्रत्यक्पराङ्मुखत्वादिलक्षणेन साध्यविरुद्धेन व्याप्तेत्यर्थः. **तुल्येति,** वाक्यस्याप्यपरोक्षविद्वेषशीलत्वादित्यर्थः. दर्शनेति, दश-
२१० मस्त्वमसीत्यत्र दृश्यत इति भावः. **तदिति,** तत्राप्यपरोक्षजनकत्वदर्शनस्यासिद्धेरिति भावः. **तदिति,** दर्शनसन्देहेऽपीत्यर्थः. **इन्द्रियेति,** मनसि प्रत्यक्पराङ्मुखत्वसन्देहान्न विरुद्धव्याप्तिनिश्चयः, प्रत्यग्विषयस्य शब्दस्यापरोक्षजनकत्वसन्देहदशायान्तुल्यन्यायस्य तद्विषयस्यानुमान-
२१५ स्यापि तथेत्यभिप्रायेणादिशब्दप्रयोगः. **इन्द्रियादिष्वेति,** वस्तुतः अपरोक्षधीसामर्थ्यस्य इन्द्रिये क्लृप्तत्वात्तस्यैव प्रत्यग्विषयत्वकल्पनं युक्तमिति भावः. दशमोऽहमिति ज्ञाने अपरोक्षत्वानुभवः कथमित्यत्राह **सामग्रीति,** शब्दोपनीतन्दशमत्वम्मनसैव गृह्यत इति भावः. **तेषामिति,**
२२० भेदवासनानिरासे यथावाक्यस्यापरोक्षज्ञानजनकत्वङ्कल्प्यते, एवमिन्द्रियस्यैव कल्प्यतामित्यर्थः. **तदपीति,** परिभवो हि नार्थनिवृत्तिर्नापि प्रतीतिनिवृत्तिरित्युक्तम्, अतोऽप्रामाण्यबुद्धिः परिभवः पर्यवस्यति, प्रकृते च्याप्ताभेदानु-

मानेन ऐक्यप्रतीतेरग्रामाण्यबुद्धिरस्त्येवेत्यर्थः. भ्रमान्तर-
२२५ प्रतिबन्धः परिभव इति चेन्न, सञ्जातेऽप्यपरोक्षेऽपीत्यादिना
अपरोक्षबाधेऽपि भ्रमानुवृत्तेः प्रागेव दर्शितत्वात्. **कथ-
ञ्चिदिति,** द्वैतविषयत्वादविरोधाद्बलावत्त्वाच्चिन्त्यैव कुत इति
भावः. निश्चितपदेन निश्चयहेतुत्वे सिद्धेऽपि सुविशेषणं
विशेषविषयत्वार्थं स्यादित्यत आह **विज्ञानमिति विशेष-**
२३० **णेन** विशेषविषयत्वसिद्धेरिति. **तज्जन्येति,** श्रवणं श्रोतव्य
इति विहितं विवक्षितम्, ततो जातं श्रावणम्, प्राथमिक-
परोक्षज्ञाने व्यभिचार इत्यर्थः. अग्निहोत्रादिवाक्ये प्रयोगो-
ऽप्रयोजक इत्यत आह **परिहारस्य** चेति, मिथ्यार्थनिवृत्त्या
२३५ अपरोक्षज्ञानकल्पनस्य निरासादिति भावः. योगज-
धर्माद्यजन्यजन्यत्वावच्छिन्नसाक्षात्कारित्वव्यापकं विषयजन्यत्व-
मुपाधिरित्यत आह **विषयेति. न वाक्येति,** प्रत्यक्षत्वे तु
न वाक्यजन्यताहेतुः प्रयोजकः, किन्त्वर्थजन्यत्वमेव हेतु-
स्स्यात्, ततश्चायं सोपाधिक इत्यर्थः. किं यावत्तत्त्वम-
२४० स्यादिवाक्यव्यक्तयः पक्षः, उत श्रवणाद्यनन्तरभाविव्यक्ति-
मात्रम्, आद्ये मननात् प्राथमिकव्यक्त्यावंशतो बाधमभि-
प्रेत्य द्वितीये तत्रैव व्यभिचारमाह **सोऽपीति. दृष्टान्त-
स्येति** स्वप्रकाशत्वस्य दृश्यत्वस्य चास्वप्रकाशत्वात्तत्त्वतः प्रत्य-
क्षत्वाभावाच्चेति भावः. **विगीतमिति,** ननु साध्ये
२४५ स्वशब्दस्य भिन्न(जन्य)परत्वे तत्त्वमसिवाक्यार्थविषयप्रत्य-
क्षत्वाप्रसिद्धेः, तज्जनकत्वाप्रसिद्धौ तद्भेदसाधनमनुपपन्नम्,

जनकपरत्वे कस्यापि वाक्यस्य स्वार्थगोचरप्रत्यक्षजनकत्वा-
भावात् प्रतियोग्यप्रसिद्ध्या तद्भेदसाधनमनुपपन्नम्, स्वार्थ-
शब्देन स्वजन्यज्ञानविषयत्वं विवक्षित्वा इन्द्रिये प्रतियोगि-
२५० प्रसिद्ध्युपपादने बाधः, स्वस्यैव स्वजन्यश्रावणज्ञानविषयतया
स्वार्थत्वात् विषयतया स्वगोचरज्ञानजनकत्वाच्च स्वार्थ-
शब्देन भिन्नत्वमात्रं विवक्षित्वा स्वभिन्नविषयप्रत्यक्षजनकत्व
भवतीत्युक्तौ बाधो दृष्टान्तासिद्धिश्च, स्वजन्यश्रावणज्ञानस्य
तत्कारत्वादिविषयत्वात्, नन्वस्तु स्वशब्दो भिन्नपर एव, न
२५५ च तत्त्वमसिवाक्यार्थप्रत्यक्षाप्रसिद्धिः, घटादिगोचरप्रत्यक्ष-
स्यैव प्रमेयत्वादिसामान्यलक्षणाप्रत्यासत्तिजन्यस्य तत्त्वमसि-
वाक्यार्थगोचरत्वादिति चेन्न, बाधादेव तत्त्वमसिवाक्य-
गोचरसामान्यलक्षण(णा)प्रत्यासत्तिजन्यज्ञानस्यापि तत्त्वमसि-
वाक्यगोचरतया वाक्यस्य तत्र जनकत्वात्, न च सामान्य-
२६० प्रत्यासत्तिजन्यज्ञाने सन्निहितविषयप्रतियोगिकलौकिक-
प्रत्यासत्तेर्जनकत्वाभावात्, तस्य प्रत्यासत्तिद्वारकजनकत्व-
मिति वाच्यम्, सन्निकृष्टविषयांशे लौकिकप्रत्यासत्ते-
र्विद्यमानतया तस्या जनकत्वस्यावर्जनीयत्वात्, न ह्यप्रति-
बद्धा सामग्री कार्यं न जनयतीति केनापि वक्तुं शक्यम्,
२६५ कस्य चित्प्रतिबन्धकत्वकल्पने च न किञ्चित्प्रमाणमस्ति,
अस्तु तर्हि जनकपरत्वमेव, न च प्रतियोग्यप्रसिद्ध्या साध्या-
प्रसिद्धिः, शब्दो वर्त्तत इति वाक्ये स्वार्थविषयप्रत्यक्ष-
जनकत्वस्य प्रसिद्धत्वादिति चेन्न, तत्रैव व्यभिचारात्, अस्तु

तर्हि स्वजन्यज्ञानविषयप्रत्यक्षजनकत्वाभावस्साध्यः, इन्द्रिये
२७० च प्रतियोगिप्रसिद्धिः, न च बाधः, विषयतातिरिक्तरूपेण
स्वजन्यत्वस्य विवक्षितत्वात्, वाक्यप्रत्यक्षस्य विषयतारूपेणैव
तज्जन्यत्वात् स्वकरणकत्वं वा स्वजन्यत्वमिह विवक्षितमिति
चेन्न, शब्दो वर्त्तत इत्यत्र व्यभिचारात्, अस्तु तर्हि
स्वभिन्नविषयप्रत्यक्षजनकत्वाभावः, न च तकारत्वादिप्रत्यक्ष-
२७५ जनकत्वाद्बाधः, स्वगोचरप्रत्यक्षस्य त्यविषयत्वस्य स्वभिन्न-
विशेषणत्वात्, यद्यप्येवमिन्द्रिये प्रतियोगिप्रसिद्धिः, तथापि
शब्दस्पर्शादिप्रत्यक्षजनके शरीरे प्रसिद्धिरिति चेन्न, सर्व-
स्यापि शरीरादिविषययोगिप्रत्यक्षादिविषयत्वेनाप्रसिद्धे-
रिति. उच्यते, साध्ये स्वपदम्भिन्नपरमस्तु, साध्यप्रसिद्धिस्तु
२८० सामान्यप्रत्यासत्त्या सर्वविषयप्रत्यक्षजनकेन्द्रिये, न चोक्तबाधः,
स्वार्थविषयत्वावच्छेदेन प्रत्यक्षजनकभेदस्य साध्यत्वादिन्द्रि-
यस्य प्रत्यासत्तिभूतसामान्याश्रयसर्वविषयावच्छेदेन प्रत्यक्ष-
जनकत्वात्, विषयस्य च स्वविषयकतावच्छेदेनैव विषयतया
जनकत्वात्, न च शब्दो वर्त्तत इत्यत्र व्यभिचारः,
२८५ स्वागोचरवृत्तिकवाक्यत्वस्य हेतुत्वात्, शब्दो वर्त्तत इत्यस्य
स्वगोचरवृत्तिकत्वात्, अस्तु वा स्वपदज्ञनकपरम्, न
चोक्तव्यभिचारः, पूर्ववदेव हेतुविशेषणात्, अस्तु वा विष-
यतानवच्छिन्नस्ववृत्तिकारणतानिरूपितजन्यताश्रयज्ञानविष-
यप्रत्यक्षजनकत्वाभावस्साध्यः, प्राग्वदेव हेतुविशेषणाच्च न
२९० पूर्वोक्तव्यभिचारः. अस्तु वा स्वकरणकत्वं स्वजन्यत्वम्, न

च पूर्वोक्तव्यभिचारः, ज्ञानप्रत्यक्षपदव्यत्यासेन स्वकरणक-
प्रत्यक्षविषयज्ञानजनकभेदस्य साध्यत्वात् . अस्तु वा स्वगो-
चरप्रत्यक्षाविषयस्वभिन्नविषयप्रत्यक्षजनकत्वाभावः, शरीरादौ
च प्रतियोगिप्रसिद्धिरुक्ता, न च सर्वस्य शरीरादिविषय-
३९५ योगिप्रत्यक्षादिविषयत्वात् साध्याप्रसिद्धिः, योगजधर्माद्य-
जन्यत्वेन स्वगोचरप्रत्यक्षविशेषणात्, अत्र च साध्ये वाक्य-
त्वादित्येव हेतुरिति प्रत्यक्षकरणत्वं भवतीति वा विष-
यतातिरिक्तरूपेण प्रत्यक्षजनकं न भवतीति वा प्रत्य-
क्षजनकतानवच्छेदकविषयतातिरिक्तयावत्स्ववृत्तिधर्मकमिति
४०० वा साध्यम्, अत्र चरमसाध्ये विषयतातिरिक्तपदम्बाध-
व्यभिचारवारणाय, एवञ्च स्वतोऽपरोक्षविषयत्वादेरनव-
च्छेदकत्वसिद्धा इष्टसिद्धिः, एतेषु त्रिष्वपि साध्येषु
वाक्यत्वादित्येव हेतुरिति . **विगीतेति**, तत्त्वमस्यादि-
वाक्यजन्या तद्गोचरा धीः पक्षः. स्वप्रकाशतया स्वांशे प्रत्यक्ष-
४०५ त्वात् बाधवारणाय साध्ये स्वविषय इत्युक्तम् . **वाक्येति**,
घटप्रत्यक्षे व्यभिचारवारणाय विशेषणं, वाक्यप्रत्यक्षवारणाय
विशेष्यं, **वाक्येतरपदं** वाक्येतरमात्रपरम्, तेन वाक्य-
जन्यत्वे सति वाक्याविषयत्वं पर्यवस्यति . **अनतिप्रसङ्ग-
केति**, अग्निहोत्रादिवाक्येष्वप्यपरोक्षधीजनकत्वस्य तन्न्यायेन
४१० साधनसम्भवात्, यथा तत्त्वमस्यादिवाक्यजन्यज्ञानत्वेनाप-
रोक्षधीजनकत्वसाधनेऽतिप्रसङ्गः, न तथाऽस्मदुक्तव्याप्ताविति
वलवत्त्वमिति भावः . **समत्वेऽपीति**, स्थापनाऽनुमानस्य

हि प्रतिरोधो दोषः, प्रत्यनुमानस्य तु स्थापनाप्रतिबन्धैक-
फलत्वान्न प्रतिरोधो दोष इत्यर्थः . वस्तुतोऽस्यैव विवक्षो-
४१५ बाधकमित्याह न चेति . अविशेषादिति, ज्योति-
ष्टोमादिवाक्यव्यावृत्तावान्तरोपाधेरभावादित्यर्थः . प्रत्य-
क्षार्थविषयत्वं तत्त्वमस्यादिवाक्ये विशेषः, ज्योतिष्टोमादि-
वाक्ये तु तदभावान्नातिप्रसङ्ग इत्यत आह न चेति . ननु
कथं ज्योतिष्टोमादिवाक्ये तत्प्रसङ्गः, अपरोक्षार्थविषयत्व-
४२० रूपप्रयोजकस्य तत्राभावादित्यत आह तथापीति, अप-
रोक्षार्थविषयत्वं हि अपरोक्षज्ञानविषयार्थविषयकत्वम्,
तथा च अपरोक्षज्ञाने आपाद्यमाने अपरोक्षार्थविषयत्वमपि
सहैवापादितम्भवतीति नावान्तर विशेष इत्यर्थः . पूर्वेषा-
न्त्वदनुमानानामिह तु प्रागुक्तार्थापत्तिरेव विपक्षे बाधि-
४२५ केत्युक्तमुत्थाप्य निराकरोति नन्वित्यादिना . वाक्यार्थ-
ज्ञानादिति, वाक्यार्थो ब्रह्म, तज्ज्ञानादित्यर्थः, न तु
वाक्यजन्यं ज्ञानं विवक्षितम् . उत्तरत्र ब्रह्मणि ह्रित्यादिना
करणपरिशेषात्प्रत्यक्षस्य विषयजन्यत्वमुपपादयति प्रत्य-
क्षेति . अथेति, तत्त्वमस्यादिवाक्यस्यापरोक्षज्ञानजनकत्व-
४३० रूपोद्देश्यसिद्ध्यर्थमीश्वरयोगिप्रत्यक्षवृत्तितया सिद्धसाधन-
वारणार्थञ्च साध्ये तत्त्वमस्यादिवाक्यजन्येति . अथेति,
तत्त्वमस्यादिवाक्यजन्यतदर्थमात्रविषयज्ञानवृत्तीत्यर्थः, सि-
द्धान्ते तत्त्वमसिवाक्यजन्यशाब्दानुभवसंस्कारसहकृतमनो-
जन्ये सोऽहमिति प्रत्यक्षे सत्त्वेन सिद्धसाधनवारणार्थम्पूर्व-

४३५ यदुद्देश्यविधेयार्थस्य तत्त्वमसिवाक्यजन्येति विशेषणम्. तथा-
पीति, ब्रह्मेतरविषयत्वे साध्याभावस्य निश्चितत्वाद्धेतो-
रसन्दिग्धत्वात्सन्दिग्धानैकान्त्यमित्यर्थः, न चानुपदोक्ते मानसे
सोऽहमस्मीति प्रत्यक्षे व्यतिरेकनिश्चयान्न सन्दिग्धानैकान्त्य-
मिति वाच्यम्, परमते मनसोऽप्रमाणत्वात्तन्मतेनैवास्योक्तत्वात्.
४४० यद्वा तत्त्वमस्यादिवाक्यजन्यज्ञानान्यज्ञानत्वं वा विवक्षितम्.
तत्त्वमस्यादिवाक्येति, वाक्यातिरिक्तजन्यस्यापि ब्रह्मसाक्षा-
त्कारस्य सत्त्वात् ब्रह्मेतरविषयत्वस्य च तत्राभावाद्धेत्वभावादेव
न व्यभिचार इत्यर्थः. अद्यापीति, श्रुतेरान्यपर्यस्योक्तत्वे-
ऽपीत्यर्थः. श्रूयते ह्येति, दर्शयति भगवान्सनत्कुमार इत्यत्र
४४५ वाक्यरूपकरणस्य विवक्षितत्वाच्चाक्षुषज्ञानमुख्यस्य दृशेस्तत्रा-
मुख्यत्वात् कृत्स्नशब्दप्रमाणस्य(त्व)स्यानुरोधेन परोक्षज्ञान
एव दर्शनवदनेकविशेषविशिष्टावगाहनरूपगुणयोगाद्वृत्तिः,
इह तु करणान्तरासम्भवान्न. धर्मवीर्यस्य च पृथक्करणत्वे
गौरवान्मननसहकारित्वेनोपपत्तेस्संस्काराजन्यत्वेन स्मृतित्वा-
४५० भावात्, पश्यतेश्च दर्शनवाचिनस्सादृश्यातिशयेन प्रत्यक्षत्व-
मुखेन लक्षणौचित्याच्च सम्प्रपश्यतीत्यनेन प्रत्यक्षत्वसिद्धिरि-
त्यर्थः. मोक्षसाधनेति, "स्मृतिलम्भे सर्वग्रन्थीनां विप्र-
मोक्ष" इति श्रुत्यनुसारात्तथोक्तमिति भावः, "तस्मिन्दृ-
ष्टेपरावर" इत्यपि श्रूयते इति चेन्न, प्रत्यक्षपरत्वेऽपि लक्षणाया
४५५ वाच्यत्वेन स्मृतिलम्भ इत्यव्यवहितसाधनत्वस्वारस्यानुरोधेन दृशे-
र्दर्शनसमानाकारपरत्वौचित्यात्. ननु त्वन्मते योगिप्रत्यक्षस्य

बन्धनिवर्तकत्वाभावात्. कथं तेनान्यथासिद्धिरित्यत आह यद्यपीति, तन्मते मिथ्या(र्थ) भूतबन्धस्यापरोक्षज्ञाननिवर्त्यत्वाद्योगिप्रत्यक्षमादायान्यथा सिद्धिस्स्यादेवेत्यर्थः. नन्वलौ-
४६० किकप्रत्यक्षस्य प्रत्यक्षभ्रमानिवर्तकत्वान्न योगिप्रत्यक्षेणान्यथासिद्धिरिति चेत्तर्हि लौकिकसन्निकर्षजन्यप्रत्यक्षस्यैव भ्रमनिवर्तकतया शाब्दप्रत्यक्षकल्पनानुपपत्तेः अलौकिकसन्निकर्षाजन्यप्रत्यक्षस्य भ्रमनिवर्तकत्वे गौरवात्. तस्त्विति, अन्यत्र प्रत्यक्षान्तर्भाव प्रयोजकत्वेन क्लृप्तस्य प्रत्यक्षकरणत्वस्य शब्देऽपिसत्त्वात्
४६५ प्रत्यक्षान्तर्भावस्स्यात्, न चान्यत्र अज्ञातत्मकविषयशब्दान्यत्वन्तप्रयोजकत्वेन क्लृप्तम्, तत्त्वमस्यादिवाक्यस्यापरोक्षधीजनकत्वस्याव्याप्यसिद्धेरित्यर्थः, यदाह नवीनः, आत्मा तावत्स्वतोऽपरोक्षः "यत्साक्षादपरोक्षा"दिति श्रुतेः, तत्र साक्षादिति ज्ञानक्रियाव्यवधानस्य निषिद्धत्वात् घटादिकस्यापरोक्षात्मन्य-
४७० ध्यस्तमिति, स एव तदपरोक्षता तदपरोक्षानुभवस्य तत्सत्तानुभवस्येव तदधिष्ठानात्मगोचरत्वात्, तर्हि सत्त्वमिव घटादेरपरोक्षत्वमपि सर्वदा स्यादिति चेन्न, प्रमातृचैतन्यतादात्म्यस्य सर्वदा असत्त्वात्, अतएव देवदत्तस्यापरोक्षतादशायां सर्वस्यापि घटादिरपरोक्षस्स्यादिति निरस्तम्, तदवच्छिन्नचै-
४७५ तन्यस्यान्यप्रति भिन्नत्वात्, अतएव घटापरोक्षत्वदशायां रसगुरुत्वादिकस्यापरोक्षं स्यादिति निरस्तम्, चक्षुर्जन्यवृत्तेरसाद्यवच्छिन्नचैतन्यानभिव्यञ्जकत्वात्तज्जन्यायाएव वृत्तेस्तदपरोक्षताव्यञ्जकत्वात् सुखाद्यवच्छिन्नचैतन्यस्य . वृत्तिं विनैवाभि

यक्तम्, तस्यानाद्वतयाऽध्यासात्, तर्हि धर्मादिकमप्यपरोक्षं
४८० स्यादिति चेत् न, तस्यानुद्भूततया अप्रत्यक्षत्वात्, स्वरूपविशेषस्य
परमत इव तत्राप्यपेक्षितत्वात्, यथा संयुक्तसमवाये सत्यपि
न धर्मादेरपरोक्षज्ञानजनकत्वम्, एवमस्मन्मते तस्यापरोक्षता-
नभिव्यञ्जकत्वात्, तस्माद्यज्जडमुद्भूतं यदा यदभिन्नचैतन्या-
भिन्नम्, तत्तदा तस्यापरोक्षतादात्म्यात् भवत्यपरोक्षम्, ज्ञा-
४८५ नापरोक्षत्वन्तु चैतन्यस्य स्वरूपेणैव वृत्तेस्त्वपरोक्षार्थ विषयत्वम्,
न चापरोक्षार्थविषयत्वमेव ज्ञानस्यापरोक्षत्वञ्चैतन्यवृत्तिसाधा-
रणमिति वाच्यम्, चैतन्यस्य सुखसाक्षात्काराभावत्व(कारत्वा-
भाव) प्रसङ्गात्, अतएवानुमित्यादिर्नापरोक्षः, लिङ्गादिज-
न्यवृत्त्यभिव्यक्तचैतन्यस्यार्थभिन्नत्वात्, न च योगिप्रत्यक्षस्या-
४९० प्रत्यक्षत्वप्रसङ्गः, तस्याप्युद्भूतविद्यमानपदार्थे व्यवहितेऽपि चक्षु-
रादिसम्प्रयोगसम्भवेन विषयचैतन्याभिव्यक्तेस्सत्त्वात्, अवि-
द्यमानेऽनुद्भूते न तज्ज्ञानम्प्रत्यक्षम्, किन्तु योगाराधितप-
रमेश्वरोपदेशजन्यमपरोक्षम्, अतएव योगिनां व्यवहितार्थज्ञाने
ध्यानादिकमर्थवद्भवति, धर्मविशेषजन्यज्ञानाभासो वा, नन्वे-
४९५ वमपरोक्षार्थविषयानुमितेरप्यपरोक्षत्वं स्यादिति चेत्, सत्यम्,
ज्ञानवत्तस्या अप्यपरोक्षविषयिण्या अपरोक्षत्वात्, अतएक पर्व-
तांशे अनुमितिस्साक्षात्करोमीत्यनुभूयते. नन्वेवमहङ्काराद्य-
तिरिक्तात्मानुमितिरप्यपरोक्षा स्यादिति चेत् यद्यप्यपरोक्षार्थ-
विषयत्वमाप(पा)द्यते, तर्ह्यसिद्धिः, अथानुमितिविषयस्य तस्य
५०० साक्षात्करोमीत्यनुभवविषयत्वन्तदस्त्येव चैतन्यं, साक्षात्करो-

मीत्यनुभवात्, न चैवमनुमितेरपि साक्षात्कारतयानुभवप्र-
सङ्गः, अपरोक्षार्थविषयज्ञानत्वस्याप्यनुभूयमानत्वात्, घटादि-
विषयेन्द्रियजन्यज्ञानेष्यतोऽतिरिक्तसाक्षात्कारताऽननु भवात्.
न चैवमनुमित्याप्यविद्यानिवृत्तिप्रसङ्गः, देहातिरिक्तात्मानु-
५०५ मितिगोचरमात्रविषयाज्ञानाभावात्, पूर्णब्रह्मविषया-
ज्ञानस्य भिन्नविषयानुमित्या निवृत्त्यसम्भवात्, शुद्धे सत्य-
ज्ञानानन्दात्मके ब्रह्मणि नियमेन पक्षसाध्यादिवैशिष्ट्यविष-
यानुमितिर्न सम्भवत्येव, तत्त्वमस्यादिवाक्यसन्निधावेव "तस्य
तावदेव चिरं, यावन्न विमोक्ष्ये" इति श्रवणेन "वेदान्तवि-
५१० ज्ञानसुनिश्चितार्था" इति वचनेन च श्रुतिजन्यज्ञानस्यैव मुक्ति-
साधनत्वावगमात्. न चैवमात्मानुमितेरपि प्रत्यक्षप्रमात्वेन
व्यवहारप्रसङ्गः, प्रत्यक्षव्यवहारस्येन्द्रियजन्यमात्रगोचरत्वात्, न
च चक्षुरादाविवापरोक्षप्रमाणव्यवहारापत्तिः, आत्मानुमानं
ह्यन्यतल्लिङ्गापरोक्षताधिष्ठितार्थविषयतया दैवादपरोक्षम्,
५१५ न त्वर्थस्यापरोक्षतायां निमित्तम्, चक्षुरादिकन्त्वर्थापरोक्ष-
तायाम्प्रयोजकमित्यनेनैव विशेषेण तन्मात्रगोचरोऽपरोक्ष-
व्यवहारः, तस्मात्तत्त्वमस्यादिवाक्यजन्यज्ञानञ्च परोक्षम्,
अपरोक्षार्थविषयत्वाच्चाक्षुषज्ञानवत्, तत्त्वमसिवाक्यार्थविषय-
ज्ञानमपरोक्षम्, अविद्यानिवर्तकत्वात्, सम्प्रतिपन्नवत्, न
५२० चेन्द्रियजन्यत्वमुपाधिः, त्वदभिमताजन्यप्रत्यक्षे सुखादिप्रत्यक्षे
दृश्यमस्त्यमयीति ज्ञाने च साध्याव्यापकत्वात्, न च जन्यज्ञा-
नस्य परोक्षत्वाभावे इन्द्रियजन्यत्वमुपाधिः, जन्यज्ञानपरोक्षत्वे

भिन्नजन्यत्ववक्तव्याप्रयोजकत्वात्, अपरोक्षार्थविषयत्वस्यैव वृत्तावपरोक्षता(क्षार्थ)रूपत्वेन तस्य परोक्षत्वाभावव्याप्तेश्च,
५२५ अतएव न शब्दाजन्यत्वमुपाधिः, अन्यथा तत्त्वमसिवाक्याद-परोक्षज्ञानाभावे अविद्यानिवृत्त्यभावादनिर्मोक्षप्रसङ्गाच्चेति.
अत्रोच्यते, अस्तितावल्लोके ज्ञानार्थयोरपरोक्षत्वव्यवहारः, तत्र यद्यर्थगतमपरोक्षत्वं तद्विषयत्वनिबन्धन एव ज्ञाने तद्व्यवहार-इत्युच्येत, तदा देवदत्तेन साक्षात्क्रियमाणघटविषयकशाब्द-
५३० ज्ञाने यज्ञदत्तस्य जाते तदुभयवेदिनश्शाब्दज्ञाने अपरोक्ष-व्यवहारप्रसङ्गः, स्वाश्रयं प्रत्यपरोक्षार्थविषयत्वनिबन्धनो ज्ञाने प्रत्यक्षत्वव्यवहार इति चेत्, स्वाश्रयप्रतीत्यत्र विवक्षितम् स्वाश्रयप्रतिसम्बन्धित्वमुतस्विं स्वाश्रयाभिन्नत्वमन्यद्वा, नाद्यः, लौकिकानामात्मार्थयोर्भेदप्रतीतावपि ज्ञाने अपरोक्ष-
५३५ व्यवहारात्. न द्वितीयः, अनिर्वचनात् स्वाश्रयसम्बन्ध्य-परोक्षाभिन्नत्वान्तदिति चेत् न, मदीयत्वेन भासमानस्य वृत्त्यवच्छिन्नापरोक्षचैतन्यस्य विषयात् भेदस्यैव प्रतीतेः, तस्मात्स्वाश्रयसम्बन्ध्यपरोक्षप्रतीतिविषयत्वमेव तदिति वाच्यम्, तथाच ज्ञानगतमापरोक्ष्यम्, अर्थे तु तन्निबन्धनं वाच्यम्,
५४० किञ्च ज्ञानापरोक्ष्यपक्षे तद्विषयत्वमात्रमेवार्थापरोक्ष्यम्, अर्थापरोक्ष्यपक्षे तूक्तप्रकारेणार्थापरोक्ष्यन्निर्वाच्यमिति गौर-वम्. यदुक्तमपरोक्षत्वं ज्ञानगतञ्जात्यादिरूपं वक्तुमशक्य-मित्यर्थस्यैव ज्ञाने तद्वाच्यमिति तन्न, अर्थेऽपि निर्वक्तुम-शक्यत्वात्, नहि ब्रह्मापि संवित्त्यातिरिक्तमपरोक्षत्वं किञ्चि-
५४५ दनुभवाम, यत्सत्त्वमिव तस्मादात्मीयादन्यत्र प्रतीयेत, संविन्तु

मापरोक्षत्वम् घटो न संविदिति भेदप्रतीतावपि घटोऽपरोक्ष इति व्यवहारात्, यदि च व्यवहारबलादितिशिष्यानिरुक्तमपि किञ्चिदर्थेऽङ्गीक्रियते, तर्हि ज्ञान एव तदिष्यताम् . ननु यदि प्रत्यक्षज्ञानविषयत्वादिविषये प्रत्यक्षत्वव्यवहारः, तदा सामान्य-

५५० प्रत्यासत्तिजन्यज्ञानविषयत्वात्परमाणुरपरोक्ष इति व्यवहारापत्तिः, शब्देन काशीस्थपदार्थज्ञानतः काशीस्थपदार्थ-ज्ञानामीत्यनुभवतः काशीस्थः पदार्थोऽपरोक्षइत्यनुभवप्रसङ्गः, अन्यस्य शाब्दं शौकृष्ण्यानुभवमनुभवतश्शौकृष्ण्यमपरोक्षमित्य-नुभवापातः, तथा दण्डवयमासीदित्यनुभवे देवदत्ते दण्डो-

५५५ ममेदानी(मप)परोक्ष इति व्यवहारप्रसङ्ग इति चेत्, न तावत्परमाणावपरोक्ष्य व्यवहारापत्तिः, लौकिकैस्तज्ज्ञा-नस्य सन्निहितव्यक्तितिरिक्तपरमाण्वादिविषयत्वापरिज्ञानात्, तत्परिज्ञातृणान्तु विदुषाभवत्येव व्यवहारः, नापि काशीस्थ पदार्थः (अ)परोक्ष इति वा शौक्ल्यमपरोक्षमिति

५६० वाऽनुभवप्रसङ्गः, ज्ञानस्य स्वयम्प्रकाशतया तदनुव्यव-सायाभावेन ज्ञानस्य तत्राप्रत्यासत्तित्वात्, प्रत्यासत्तिपक्षेपि तदंशे प्रत्यक्षत्वव्यञ्जकस्य तदंशे प्रत्यासत्तिजन्यत्वस्याज्ञानात्, अतएव दण्डांशेपि न प्रत्यक्षत्वव्यवहारः, किञ्च तत्रापि प्रत्यक्ष-ज्ञानविषयत्वस्य सत्त्वाद्दण्डश्चक्षुषा जानामि प्रत्यक्षेण जाना-

५६५ मीत्यनुभवस्त्यात्, यदि चेष्टापत्तिस्तदाऽस्माकमपि तुल्यम्, देवदत्तः प्रत्यक्षः दण्डस्तु नेति व्यवहारोपि तदंशे प्रत्यासत्तिज-न्यत्वस्य व्यञ्जकस्याज्ञानाद्देवदत्तवत् स्वतन्त्रप्रत्यक्षविषय-त्वाभावाद्वा देवदत्तं विहाय दण्डस्याप्रत्यक्षत्वात्, किञ्च

चाक्षुषत्वं यदि चक्षुर्जन्यज्ञानविषयत्वं स्यात् तदा दण्डेऽपि
५७० तत्सत्त्वाद्दण्डोममेदानीं चाक्षुष इति व्यवहारापत्तेश्चाक्षुषत्व-
मप्यपरोक्षत्ववत् ज्ञानाभिबन्धनमेवार्थगतं स्वीकार्यं स्यात्,
किञ्च वह्निमनुमिनोमीतिवत्पर्वतमनुमिनोमीत्यव्यवहारा-
दनुमेयत्वमप्यनुमिति विषयत्वादन्यत्स्यात्, तस्माज्ज्ञानगत-
मेवापरोक्ष्यम्, "यत्साक्षा"दिति श्रुतिस्तु स्वप्रकाशतत्प्रदि-
५७५ परत्वेनाप्युपपन्ना, साक्षादिति घटादाविव ज्ञानान्तराधीन-
साक्षात्त्वस्य निषेधसम्भवात्, किञ्च यदि सत्तानुभव इवा
परोक्षत्वानुभवोपि तदधिष्ठानात्म(क)गोचरस्स्यात्, तदा सत्त्व-
वदपरोक्षत्वमपि निष्प्रतियोगिकं स्यात्, अतः कञ्चित्प्रति
कदाचिदपरोक्षङ्कञ्चित्प्रति कदाचिन्नेति न स्यात्, यदप्युक्तम-
५८० परोक्षार्थविषयत्वं वृत्तेरपरोक्षत्वमिति, तत्रा परोक्षत्वमित्य-
स्यापरोक्षव्यवहारनिमित्तमित्यर्थः, तथाच प्रत्यक्षव्यवहारस्य
इन्द्रियजन्यमात्रगोचरतयेति स्ववचनविरोधः, न च नेदं
लौकिकव्यवहारनिबन्धनम्, किन्तु परीक्षकव्यवहारनिबन्ध-
नमिति वाच्यम्, एतस्य नैयायिकाद्यपरोक्षव्यवहारनिबन्धन-
५८५ त्वाभावात्, न च त्वत्समयपरीक्षकव्यवहारनिबन्धनम्, त्वदभि-
मतपारिभाषिकप्रत्यक्षत्वसाधनेपि उभयसम्प्रतिपन्नापरोक्ष्य-
निष्ठस्य अस्मदभिमतस्यापरोक्षव्यवहारनिबन्धनस्य शाब्दज्ञाने
असाधनेनार्थान्तरत्वात्, न च सर्वत्रापीदमेव व्यवहारनिबन्ध-
नम्, तु त्वदभिमतमिदन्त्वशाब्दज्ञानेप्यस्तीति साध्यतं इति
५९० वाच्यम्, स्वोक्तिविरोधादेर्दर्शितत्वात्, किञ्च किमत्रापरो-
क्षार्थविषयत्वं साध्यते, उतापरोक्षतादात्म्येनाध्यस्तार्थविषय-

त्वम्, आद्येपि ब्रह्मणो परोक्षत्वे सिद्धे तद्विषयत्वं साध्यते, उता- सिद्धे, नाद्यः, सिद्धसाधनात्, न हि तत्त्वमस्यादिवाक्यस्य ब्रह्मविषयत्वे कश्चिद्विप्रतिपद्यते, नन्वस्तु द्वितीयः पक्षः, तच्च

५९५ ब्रह्मविषयत्वस्य सिद्धत्वादपरोक्षत्व साधने पर्यवस्यतीति चेन्न, स्वप्रकाशवादिनम्प्रति तस्यापि सिद्धत्वात्, अन्यम्प्रति साध- नेपि सिद्धसाधनमेव, नैयायिकादिभिरपीश्वरस्यापरोक्ष- त्वाङ्गीकारात्. ननु तैस्स्वकीयापरोक्षज्ञानविषयत्वेनाप- रोक्षत्वाङ्गीकारेपि स्वरूपत आपरोक्ष्यमाङ्गीकृतमिति चेत्,

६०० तत्किङ्घटादावापरोक्ष्यन्त्वाद्दृष्टान्तेरङ्गीकृतम्, अतस्साध्यविक- लो दृष्टान्तः, घटाद्यधिष्ठानचैतन्यांशमादाय साध्योपपादने चैतन्ये अपरोक्षत्वसिद्धासिद्धिभ्यां सिद्धसाधनसाध्यवैकल्ये. न द्वितीयः, बाधात्, किञ्चाज्ञानावृतसाक्षि चैतन्याभिन्नत्वं यद्या- परोक्ष्यम्, तदा कश्चन्द्र इति प्रश्नस्थले चन्द्रस्वरूपस्य ज्ञातत्वेपि

६०५ तदनवधारणात्मकाज्ञानानिवृत्तिरिति त्वयाभिधा- नात्, तत्र चन्द्रस्याज्ञानावृतसाक्ष्यभेदाभावेनापरोक्ष्याभावात्त- द्विषयकज्ञानस्याप्यापरोक्ष्यमनुभूयमानम्भज्येत, अनभ्यासदशा- यामुत्पन्नज्ञानस्य उत्तरकाले संशयदर्शनेन त्वयाऽनवधारणत्वा- ङ्गीकारात्, तस्मादावरणानिवृत्तेस्तस्यापरोक्षत्वमस्यादिति .

इति श्रीवाधूलकुलतिलक श्रीनिवासाचार्यपादसेवासमधिगत- परावरतत्त्वयाथात्म्येन तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्धमहाचार्यापरनामधेयेन रामानुजदासेन विरचितायां शतदूषणीव्याख्यायाञ्चण्डमारुताख्यायां

शब्दजन्यप्रत्यक्षभङ्गस्सप्तमस्कन्धः ॥